त्तमपदम् । तत्रापि स्वरूपानन्ददानेनानिशं पोष्यमाणानां भक्तानां तदितरत्रोपयोगासम्भवेनैव न शङ्कोदय इति ज्ञापनाय श्रीपदम् । तथा च तद्युक्ते तत्र निवेदने सा त्याज्येति भावः । कदाचिल्लोकभयाद्युपस्थितौ तन्निवारणाय जीवस्वभाववशादन्यविनियोगेपि तथेत्याहुः विनियोगेपीति । प्रमादात्तथासम्भवेपि प्रभुर्न त्यक्ष्यति । यतस्तत्स्वभाववशात्तथाभूतमप्युद्धर्तुं तत्साधनानपेक्षः ॥ ५ ॥

अङ्गीकारे लक्षणान्तरमप्याहुः लोक इति ।

**लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति ।**
**पुष्टिमार्गस्थितो यस्मात् साक्षिणो भवताखिलाः ॥ ६ ॥**

---

श्रीमत्पुरुषोत्तमकृतविवृतिप्रकाशसमेतम् ।

पोत्तमपदेन तं वदन्तीत्याशयेन तत्पदं विवृण्वन्ति, पुरुषोत्तमेनेत्यादि श्रीपदमित्यन्तम् । तात्पर्यं स्फुटीकुर्वन्ति तथा चेत्यादि । सरसभक्तयुक्तो भगवान् हीन्द्रयागभङ्गगोवर्धनोद्धरणादिलीलाभिस्तथाकुर्वन् स्वीयान् पुष्णातीति इन्द्रयागभङ्गादिमोधकाच्छब्दादेव भगवतस्तथास्वभावमवगत्य सा त्याज्या, स्वस्यानन्यभावेन भजनस्य निर्वाहे कार्यलिङ्गकानुमानादेवाङ्गीकारं निश्चित्य सा त्याज्या भक्तानां दयालुत्वादित्यर्थः । न च निवेदनगद्ये भगवतः केवलस्यैव सम्प्रदानत्वमुक्तमिति कथमत्र श्रीपुरुषोत्तमपदेन भक्तयुक्ते निवेदनमुच्यत इति शङ्क्यम् । एकादश एव'रामेण सार्धं'मित्यादिना या तावद्भक्तिः प्रशंसिता, तत्परमकारणत्वेनोनविंश आत्मनिवेदिधर्मा उक्ताः, तत्रात्मनिवेदनप्रकारो न स्फुट इति तन्नत्वे सर्वं संगृह्य कल्पसूत्रवत् गद्ये प्रभुणोक्तः, अतः कृष्णपदेन तत्र ताभिः सहित एव परामृश्यते । तेन भक्तयुक्तस्यैव सम्प्रदानत्वम् । किञ्च, सदानन्दो हि भगवान् रसात्मक एव, 'रसो वै स' इति श्रुत्या सिद्धो, रसश्चालम्बनसापेक्ष एवेत्सतोपि तथेति न विरोधगन्धोपि । ननु सत्यमेवम्, तथापि स्वस्य कदाचित् कथञ्चिदन्यविनियोगे जाते तस्माद्विरुद्धकार्यादङ्गीकारे सन्देहो भवत्येवेति तद्रूपा सा कथं त्यक्तुं शक्येत्याकाङ्क्षायां तत्रोपायं वदन्तीत्याशयेनोत्तरार्धमवतारयन्ति कदाचिदित्यादि । न तथेति । न कार्या । व्याकुर्वन्ति प्रमादादित्यादि । तत्स्वभाववशात्तथाभूतमिति । जीवस्वभाववशात् कदाचित् बहिर्मुखत्वम् । तथा च तादृशस्य कदाचिदनन्यभजनाभावेनैवं बाहिर्मुख्ये तस्य जुगुप्सा तूत्पद्यत एवेति तेन कार्येण सप्रतिबन्धकमङ्गीकारमनुमाय 'दुराम्यधं यत्स्मर्णं हविर्भागं क्रतुष्वहम् । वर्णश्च मे हरिश्चेष्टत्सासाद्धरिरहं स्मृत' इति भारते भगवद्वचनात्, भगवतः स्वीयाघनिवर्तकत्वमनुसन्धाय अपराधिनां यकीयकादीनामप्यनुग्राहकत्वेन जीवकृतसाधनानपेक्षत्वं चानुसन्धाय सा त्याज्येत्यर्थः । एतेनैतादृशदीनभावोत्सत्तिरङ्गीकारलक्षणमित्युक्तम् ॥ ५ ॥

एतदार्थ्यार्थमन्यदपि वदन्तीत्याशयेनाग्रिममवतारयन्ति अङ्गीकार इत्यादि ।

---

१. न तथेति पाठः । २. बाहिर्मुख्यम् ३. उत्पद्यत इति ।

कदाचित् प्रवाहवशाल्लौकिके वाणिज्यादौ, वैदिके आश्रमधर्मादौ वा स्थितौ तत्र विघ्न एव भवति, न तु तत्फलमित्यर्थः । तत्र हेतुः पुष्टीनि । तद्विनापि स्वबलेनैव सर्वकर्ता यत इति भावः । पुष्टिमार्गाङ्गीकारे मर्यादां न सहत इति ज्ञेयम् । एव सति किं कार्यमित्याकाङ्क्षायामाहुः, साक्षिवत् तत्कृतं पश्यत ॥ ६ ॥

**सेवाकृतिर्गुरोराज्ञा बाधनं वा हरीच्छया ।**
**अतः सेवापरं चित्तं विधाय स्थीयतां सुखम् ॥ ७ ॥**

सेवाकृतिरिति । गुर्वाज्ञाया अबाधनं यथा भवति, तथा सेवाकृतिः पूर्वमपेक्षिता । एवं वर्तमानानां कदाचिद् विशेषतो भगवदाज्ञा चेत्, गुर्वाज्ञा विरुद्धा भवेत्, तदा तथा कार्यमित्याशयेनाहुः बाधनं वा हरीच्छया । विकल्पेनाबाधनमित्यर्थः । एवं सति गुर्वा-

### श्रीमत्पुरुषोत्तमकृतविवृतिप्रकाशसमेतम् ।

व्याकुर्वन्ति कदाचिदित्यादि । अत्र च 'त्रैवर्गिकायासे'ति पूर्वोक्तं षष्ठस्कन्धवाक्यमेव बीजत्वेन ज्ञेयम्, पुष्टिप्रकरणस्थत्वात् । तथाच यथा वृत्रस्य तादृशसङ्कटोपस्थितावपि भगवत्प्रसादानुमितिरेव जाता, तथास्यापि लौकिकवैदिकास्वास्थ्योपस्थितौ यद्भगवत्प्रसादानुसन्धानम्, तदप्यङ्गीकारलक्षणम् । एतादृशबोधवन्तं प्रत्युपदिशन्ति साक्षिण इत्यादि । तद् व्याकुर्वन्ति साक्षिवत् तत्कृतं पश्यतेति । तथा च 'ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे । यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्मम' इति सप्तमस्कन्धस्थभगवदीयगृहस्थप्रकरणस्थवाक्यात् पूर्वोक्तरीत्या एतदाचार्यवाक्येन लौकिके वैदिके साक्षिवत् भगवत्कृतित्वदर्शनं यत्तदपि तल्लक्षणमित्यर्थः ॥ ६ ॥

नन्वथास्वास्थ्येपि साक्षित्वकृतिदर्शनोपदेशेन निदुःखसहनरूपं धैर्यमेव साधनत्वेनोक्तं भवति, ततश्च तावन्मात्रस्य कर्तव्यत्वे सेवायाः सम्यगसम्भवान्निवेदनवैयर्थ्यं स्यादेवेति प्रकारान्तरेण धर्महानिचिन्तायाम् तन्निवृत्त्यर्थमुपदिशन्तीत्याशयेनाग्रिममवतारयन्ति एवं सतीत्यादि । व्याकुर्वन्ति गुर्वाज्ञाया इत्यादि । तथा कार्यमिति । बाधनं कार्यम् । तथा च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरा'विति श्वेताश्वतरश्रुते 'र्नैवोऽपयन्त्यपचितिं कवयस्तवेश ब्रह्मादयोऽपि कृतमृद्धमुदः स्मरन्तः । योऽन्तर्बहिस्तनुभृताम् अशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'त्येकादशस्कन्धवाक्याद्विभ्यश्च गुरोरेव मुख्य इति । गुर्वाज्ञाबाधनाभावपूर्वकं सेवाकृतिरात्मनिवेदिधर्मः स यादृशेन साक्षिवत् तत्कृतिदर्शनेन न विघटितो भवति, तादृशतया साक्षिवत् स्थातव्यम्, न सेवाविरुद्धतया । तेन लौकिके विषये साक्षिवत् स्थेयम्, न तु सेवाविषये इति सिध्यति । तत्रापि हरीच्छा विचार्या, अबाधने बाधने वा सास्तीति । सा च भगवदनुभावमनुभवतो बुद्धिगोचरो भवति, अन्यस्य फलबलकल्प्या । एवं सति यथाधिकारं तां बुद्ध्वा कार्यम् । ततो न स्वधर्महानिरित्यर्थः । एतदेव निगमयितुमुत्तरार्धमित्याशयेनावतारयन्ति एवं सतीत्यादि ।

१. बाधनमिति पाठः । २. अन्यदिति पाठः ।

ज्ञाया अबाधने बाधने वा सेवैव मुख्या यतोऽतस्तथैव श्रेयमित्याहुः अत इति । एवं सति पर्यवसितं सुखमेवेत्याशयेन सुखमित्युक्तम् ॥ ७ ॥

कदाचित् पुत्रादिवियोगशङ्काजनितदुःखेन चिन्तासम्भवे मतिमाहुः चित्तोद्वेगमिति ।

**चित्तोद्वेगं विधायापि हरिर्यद्यत्करिष्यति ।**
**तथैव तस्य लीलेति मत्वा चिन्तां द्रुतं त्यजेत् ॥ ८ ॥**

श्रीमत्पुरुषोत्तमकृतविवृतिप्रकाशसमेतम् ।

तथा च यथा राजभोगसमये नेत्रे निमील्य वीजयन्तं बृहद्रामदास प्रति भगवता श्रीगोवर्धनेश्वरेण साक्षाद्दृक्षानं मामुन्मील्य पश्येत्याज्ञप्ते, ममाचार्याज्ञा भोगसमये दर्शनविषयिणी नास्तीति नोन्मीलयिष्यामीति तैः प्रत्युक्तम्, तदा भगवान् प्रसन्न आसीत् । सामग्र्यादिविषयिण्यां विशेषाज्ञायां तु साधारण्याचार्याज्ञा बाध्यते, तदा नाप्रसन्नो भवति, तेन सेवाया एव मुख्यत्वम्, अतस्तदनुसारेणैव श्रेयमित्यर्थः । अत्रापि 'परिनिष्ठा तु पूजायां'-मिति निवेदिप्रकरणस्थं भगवद्वाक्यमेव बीजत्वेन ज्ञेयम् । सर्वतो नितरां निरवधितया वा स्थितेरेव परिनिष्ठापदार्थत्वादिति ॥ ७ ॥

ननु भवत्त्वेवमल्पदुःखोपस्थितौ साक्षिवत् स्थितिः, महादुःखोपस्थितौ त्वेवं स्थितिरशक्येत्याशङ्कानिवृत्त्यर्थमग्रिम वदन्तीत्याशयेनाग्रिमगवतारयन्ति कदाचिदित्यादि । मूलव्याख्यानं तु स्पष्टत्वात् न कृतम्, पर तत्रायं भावः । अवश्यंभाविनो दुःखस्याप्रतीकार्यत्वात्तत्र चित्तसमाधानमेवोपायः । तच्च नानोपायैर्भवति । यथा सप्तमस्कन्धे यमप्रेतसुयज्ञबन्धुसंवादे 'अहो अमीषां वयसाधिकाना'मित्यादिना यमप्रदर्शितलोकगतिज्ञानेन सुयज्ञबन्धूनां जातम्, यथा च षष्ठस्कन्धे 'यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः । पर्यटन्ति नरेष्वेवं जीवा योनिषु कर्तृष्वि'ति जीववाक्याज्जीवस्य सर्वसाधारण्यज्ञानेन चित्रकेतुप्रभृतीनाम् । यथा च 'पित्रोः स किन्तु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः । किमात्मनः किं सुहृदामिति यो नावसीयत' इति देहस्य सर्वसाधारण्यज्ञानेन पुरूरवसः । एवमन्येपि योध्याः । ते केपि नात्मनिवेदिनामुपयुज्यन्ते, भगवत्स्मरणोदासीनत्वात्, किन्तु प्रभासीयलीलायां 'नैषां वधोपाय इयानतोऽन्य' इत्येकादशीयभगवद्विचारानुवादवाक्यात् सा लीला यथा भक्तानां चित्तोद्वेगं विधाय, या कृता लोकमर्यादारक्षणार्थम्, अग्रे तेषां नित्यसुखदानार्थं च, तथा चित्तोद्वेगं विधाय अपिशब्दादविधाय च हरिः स्वदुःखानां प्रारब्धादिरूपापहारको भगवांस्त्वदुद्धरणार्थं यद्यत् शुभत्वेनाशुभत्वेन वा आपाततः प्रतीयमानं करिष्यति, तत्कार्यं साक्षाद्वा केनचिद्द्वारेण वा तस्य अस्मदीभरस्यास्मदात्मनो भगवतस्तथैव लीला, अनेन प्रकारेणास्माकं महतोऽघस्य नाशनाय मायिकी लीलेति मत्वा साधकबाधकप्रमाणैरनुचिन्त्य चिन्तां उद्वेगजनिकां वा वर्जनितां वा तद्रूपां वा द्रुतं शीघ्रमेव त्यजेत् । तस्याः बहुकालं स्थाने कालकर्मस्वभावानां प्रबलत्वेन तथा असुरप्रवेशरूपमहोपद्रवसम्भवेन मुख्यफलप्रतिबन्धो वा विलम्बो वा स्यात्, अतो मंक्षु त्यजेदिति भावः ॥८॥

नन्विदमखिलमशक्यमिव भाति । तथाहि । श्रवणमारभ्य सख्यपर्यन्तागतौ हि पश्चान्निवेदनवार्ता । तत्र प्रत्येकं तदेव दुरापमिति दूरतरा निवेदनदिगपि । अतस्तत्कृतचिन्तान्यवियोगचिन्तादिसमाहितिर्निरर्थेति विचार्य साधनफले एकीकृत्य सर्वसमाधानमाहुः तस्मादिति ।

**तस्मात् सर्वात्मना नित्यं श्रीकृष्णः शरणं मम ।**
**वदद्भिरेवं सततं स्थेयमित्येव मे मतिः ॥ ९ ॥**

श्रीमत्पुरुषोत्तमकृतविवृतिप्रकाशसमेतम् ।

एवमत्र पुष्टिमार्गस्थस्य पूर्वं सेवोपकरणकरणकर्तृनिवेदनविषयकचिन्तानिवृत्त्युपायत्वेन स स विचार उपदिष्टः, ततः सेवाकृत्यविरुद्धतया साक्षिवत् स्थित्युपदेशेन सेवायां स्थितेश्चोपदेशेन वैराग्यरागौ विषयभेदेन व्यवस्थापिनी । चित्तोद्वेगे च लीलाविचार उपदिष्टः, तदिदानीं सर्वमशक्यम्, कालादिकृतगुणक्षोभेण चित्तस्थैर्यस्य दुर्घटत्वात्, अतोऽयमुपदेशोऽनुपदेश एवेत्याशङ्क्य कृपया तत्सिद्ध्यर्थमुपायमधुनोपदिशन्तीत्याशयेनाग्रिममवतारयन्ति नन्विदमित्यादि । तदेव दुरापमिति । श्रवणं हि भगवद्वाचकपदवाक्यानां गुरुमुखाच्छ्रुतितात्पर्यनिर्धारः । तत्पूर्वकमन्यस्याग्रे कथनं कीर्तनम् । तेषामर्थानुसन्धानं स्मरणम् । तदिदानीं सर्वतद्विदो गुरोर्दौर्लभ्येन श्रवणस्य दुरापत्वे कीर्तनस्मरणयोरपि तथात्वम् । तदभावे भगवत्स्वरूपज्ञानाभावात् पादसेवनादीनामपि भगवद्विषयत्वाभावात्तथात्वम् । एवं कालादिभिः प्रतिबन्धकैः प्रत्येकमपि द्रष्टव्यम् । साधनफले एकीकृत्य सर्वसमाधानमाहुरिति । साधनं श्रवणाद्यष्टकम् । फलमात्मनिवेदनम् । ते उभे एकीकृत्य स्वासाध्यत्वेन तस्यां कोटौ निक्षिप्य पूर्वोक्तस्य सर्वस्य सुसाध्यत्वं यथा भवति, तादृशं तत्सम्बन्धिसमाधानमाहुरित्यर्थः । समाधानं व्याकुर्वन्तः शरणागतेः समाधायकत्वे बीजमाहुः यस्मादित्यादि । भक्तिमार्गे प्रवेशे तत्र रुच्यादौ चानुग्रह एव हेतुरिति वरणश्रुत्या भक्तिहेतुनिर्णये व्युत्पादितम् । तस्मिन् सति यदा सेवाप्रतिबन्धसम्भवः, तदा प्रारब्धकालस्वभावानामेव हेतुत्वम् । तन्निवृत्तिस्तत्सर्वनियामकेन प्रभुणैव भवति, नान्यतः । तत्र च शरणागतिरेव साधनम् । 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' इति भगवद्वाक्यात् । 'देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् । सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कृत्य'मित्येकादशस्कन्धे करभाजनवाक्याच्च भगवतः शरण्यता । तस्मादङ्गीकृतस्य जीवस्योक्तरीत्या अशक्तौ शरण्यत्वात् प्रभुरेव सर्वं सम्पादयिष्यतीत्याचार्याणामाशय इत्यर्थः । एतेनाष्टमस्कन्धप्रतिपादित आपत्सु हरिसंस्मृतिरिति भगवद्भक्तिसम्पादक आपद्धर्मोऽपि गजेन्द्रसेवास्यापि सिध्यतीत्यपि बोध्यम् । नन्वेवं सति

1 भगवद्रूपद्वारा भगवच्छरणगमनं तदनुसन्धानं च साधनम् । फलं भगवदङ्गीकारः । ततो भगवद्रूपद्वारा भगवच्छरणगतौ भगवता निवेदनस्याङ्गीकाराद्रूपेषु क्रमनियमाभावाभिनिवेदनादिदिष्ट्या चिन्तासाधनतानुपपत्तेरिति भावः ।

यस्मादुक्तरीत्या स्वतः सर्वमशक्यमतः सर्वात्मना शरणागतौ प्रभुरेव सम्पादयिष्यतीति हृदयम् । भक्तिमार्गीयान् सर्वानंशान् विचार्य तत्र प्रतिबन्धं स्वाशक्तिं च स चेत् पश्यति, तदा सर्वात्मना तथा भवति । नित्यमिति नैरन्तर्यमुच्यते । अन्यथा कालेनासुरधर्मप्रवेशः स्यात् । अन्तःकरणे तथाभावेऽतथाभावे वा तथा वदनमावश्यकमिति ज्ञापयितुं सततमेवं यद्भिरित्युक्तम् । एवं सति लोकशिक्षाप्यानुषङ्गिकी सिध्यति । एवमुक्तप्रकारेण सेवापरतया स्थेयमित्यर्थो वा । नन्विदमपि न स्वशक्यमित्याशङ्क्य 'यमेवैष वृणुत' इति श्रुतेर्मे मतिरित्येव, एवंप्रकारिकैवेत्यर्थः ।

---

श्रीमत्पुरुषोत्तमकृतविवृतिप्रकाशसमेतम् ।

प्रथमत एवेदं साधनं कुतो नोपदिष्टमित्यत आहुः भक्तीत्यादि । सर्वात्मना तथा भवतीति । श्रीकृष्णाश्रयोक्तरीत्या सर्वेषां सहकारिणामतथात्वमसहायत्वं च निश्चित्य, विवेकादीनां भक्त्यन्तानां साधनानां स्वासाध्यत्वं च निश्चित्य, दीनभावेन सर्वैः प्रकारैः शरणागतिर्भवति । तथा च प्रागेवोपदेशार्हत्वेपि यदधुना सर्वान्त उपदिष्टम्, तत् सर्वात्मना सर्वैः प्रकारैर्भवनार्थमित्यर्थः । आसुरधर्मप्रवेश इति । बाहिर्मुख्यजनकाहङ्कारप्रवेशः । तथा वदनमावश्यकमिति । वाचस्तेजोमयीत्वेन वदनक्रियायां वैखरीत्वेपि वक्तुः पश्यन्ती प्रकाशयन्त्यन्तःकरणमासुरधर्मात् परावर्तयेदत आवश्यकम् । परोपकारायापि भवेत्, अतश्च तथेति बोधनायाहुः एवं सतीत्यादि । एवं सत्याश्रयस्यैव मुख्यता आयातीति सेवावश्यकत्वबोधकपूर्वग्रन्थविरोध इत्यतः प्रकारान्तरेण व्याकुर्वन्ति एवमुक्तेत्यादि । एवं यद्भिः सर्वचिन्ताराहित्यपूर्वकं सेवापरतया स्थेयम् । तथा चाङ्गत्वेनैवात्र शरणोपदेशो, न तु मार्गत्वेन, अतो न विरोध इत्यर्थः । स्वमत्या निष्कर्षकथनस्य तात्पर्यमाहुः नन्वित्यादि । इदं सर्वात्मना शरणगमनमपि न स्वशक्यम्, 'सोऽहं तवाङ्घ्र्युपगतोस्म्यसतां दुराप'मित्यक्रूरस्तुतौ तथा सिद्धत्वादित्याशङ्क्य 'यमेवैष वृणुत' इति वरणलभ्यत्वबोधकश्रुतेर्मे मतिरेवंप्रकारिकैव । भगवता यदानुगृह्यते, तदैव सर्वात्मना शरणागतिर्भवति, नान्यथा । 'तथाप्यहं भवदनुग्रहमीश मन्ये पुंसो भवेद्यर्हि संसरणापवर्गः । त्वय्यब्जनाभ सदुपासनया मतिः स्या'दिति तत्रैव वाक्यशेषात् । तथा चास्मिन् मार्गे कृपैव साधनम्, अतः श्रुत्यनुसारेण मार्गप्रवेशतद्रुच्यादिना वरणमनुमाय मदीयैरेवमेव कर्तव्यं वक्तव्यं च । यदि च न तन्निर्वाहः, तदा प्रतिबन्धकमनुमेयम् । भगवच्छास्त्रे एतदतिरिक्तस्य रहस्य सर्वप्रतिनिधिभूतस्य साधनान्तरस्याभावात् । गीतायामन्ते एतस्यैव शोकाभावार्थमुपदेशेन तथा निश्चयात् । एतद्वाक्यान्तःस्थस्य श्रीकृष्णपदस्य भक्तसहितपुरुषोत्तमवाचकताशास्त्रसुप्रसिद्धत्वेन मम स एव शरणमिति तस्मिन् सरक्षकत्वबोधनेन वाक्यतात्पर्यस्य तत्रैव निर्धारे गुरुमुखाद्वचो श्रवणस्य तत्पूर्वकाणामन्येषां च सरूपकत्वोक्तत एव सुखेन सिद्धेरिति ॥ ९ ॥

एवं सर्वं व्याख्याय ग्रन्थकरणस्यान्ते ग्रन्थस्यानुश्रुतिकथनस्य च प्रयोजनमाहुः

मक्तिमार्गे प्रवृत्तस्य दार्ढ्यार्थमिदमुच्यते ।
अन्धस्य सूर्य इव तद्विमुखस्यात्र नार्थिता ॥ १ ॥
भक्तिमार्गसुधासिन्धोर्विचारमथनैः स्वयम् ।
स्फुटीकृतानि रत्नानि श्रीमदाचार्यपण्डितैः ॥ २ ॥
मयोज्ज्वलीकृतानीत्थं हृदि धृत्वा व्रजाधिपम् ।
मज्जन्तु भक्ता येनासौ न विमुञ्चति कर्हिचित् ॥ ३ ॥

इति श्रीश्रीविट्ठलदीक्षितविरचितो नवरत्नप्रकाशः समाप्तः ।

---



भक्तिमार्ग इत्यादि । भगवत्कृपया यो भक्तिमार्गे स्वकृतार्थत्वाय प्रवृत्तः, तस्य दार्ढ्यार्थं तदुक्तरीत्या फलावश्यभावनिश्चयेन प्रवृत्त्यविघातार्थं इदं नवरत्नं शरणमन्त्रावर्तनं चोच्यत आचार्यैरुपदिश्यते । तस्यैवोद्वेगनिवर्तनस्य प्रभूणामनन्यजनवत्सलतयावश्यकत्वात्, न तु साधारणार्थम्, तत्र हेतुः अन्धस्येत्यादि । तद्विमुखस्येति । भक्तिमार्गाद्बहिर्मुखस्य । अत्रेति । चिन्तानिवृत्त्युपायबोधकेस्मिन् ग्रन्थे । शरणमन्त्रावर्तने च । तथा चार्थित्वस्य अधिकारिविशेषणत्वाद्विमुखस्य चार्थित्वाभावेनाधिकाराभावात्तदर्थं नोच्यत इत्यर्थः । एतस्य ग्रन्थस्य भगवत्सिद्धान्तसारत्वबोधनायाहुः भक्तीत्यादि । श्रीमदाचार्यपण्डितैरिति । मयूरव्यंसकादिसमासः । पण्डितत्वं च न केवलं सदसद्विवेचकबुद्धिमत्त्वम्, शास्त्रोत्थबुद्धिमत्त्वं वा । किन्तु 'पण्डितो बन्धमोक्षवि'दित्येकादशे भगवद्वाक्यात्, 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः' इति गीतायां भगवद्वाक्याच्च तादृशधर्मवत्त्वं विवक्षितम्, अन्यथा भक्तिमार्गविचारस्यासम्भवात् । 'भगवान् ब्रह्म कार्त्स्न्येने'ति द्वितीयस्कन्धवाक्येन भक्तिमार्गस्य सर्वश्रुतिसारत्वनिश्चयादिति । स्वकृतविवरणप्रयोजनमाहुः मयेत्यादि । तथा चैतदर्थं विवरणमित्यर्थः ॥ १० ॥

एवं चात्र एतत् सिद्धम् । भगवत्सेवैकतानचित्तेन यथाशक्ति सेवां कुर्वता दुःसङ्गवर्जनपूर्वकं स्वस्य स्वपरिकरस्य च भगवदीयत्वमनुसन्दधानेन पूर्वोक्तरीत्या सर्वविधचिन्तास्त्यजता सर्वत्र स्वाशक्त्यनुसन्धानेन भगवत एव शरणत्वमनुसन्दधानेन यदा स्थीयते, तदा उद्वेगाख्यप्रतिबन्धनिवृत्त्या सेवायां आधिदैविकीत्वं सम्पद्यते । तस्मादुक्तरीत्या सेवापूर्वकं सर्वात्मना शरणगमनमेव परमं साधनमिति ।

नवरत्नभासनकृतां वचसां मम यत्नपूर्वकमुपासनतः[1] ।
व्रजरत्नहृद्यकृपयास्तु सुखादसपत्नचैतससपत्नहृतिः ॥ १ ॥[2]
इति श्रीमद्वल्लभाचार्यचरणैकतानस्य पीताम्बरस्य तनुजेन पुरुषोत्तमेन
कृतो नवरत्नविवृतिप्रकाशः सम्पूर्णः ।

---

१ अनन्यभजनेति पाठः । २ व्रजरत्नहृद्यकृपयैव भवेदसपत्नचैतससपत्नहृतिरिति पाठः ।

श्रीकृष्णाय नमः ।

# नवरत्नम् ।

## श्रीविट्ठलेश्वरविरचितप्रकाशसमेतम् ।

चिन्तासन्तानहन्तारो यत्पदाम्बुजरेणवः ।
स्वीयानां तान् निजाचार्यान् प्रणमामि मुहुर्मुहुः ॥ १ ॥

ननु भगवदीयानां कथं चिन्तोद्भवः । इत्थम् । आत्मनिवेदिनो हि भगवद्भजनार्हाः, नेतरे । तत्र चैहिकपारलौकिकयोरर्थयोर्नावशिष्टं किञ्चिदसमर्पितम् । एवं सति देहादिनिर्वाहः केन कार्यः, किं निवेदितार्थेन, उत इतरेण वा । तत्र नाद्यः । तदीयार्थस्य तदिच्छां विना ग्रहीतुमशक्यत्वात्, इच्छायाश्च ज्ञातुमशक्यत्वात् । वस्तुतस्तिच्छायामपि सत्यां तदुपयोगोऽनुचितः सेवकस्य । न च तदीयानां देहादीनां तदीयार्थेन पोषणं न दोषायेति वाच्यम् । स्वतस्तथाकृतेर्दोषावहत्वात्तदिच्छायाश्च ज्ञातुमशक्यत्वादित्युक्तम् । न द्वितीयः,

---

### श्रीविट्ठलेशात्मजश्रीवल्लभकृतप्रकाशटिप्पणी ।

चिन्तात्रयनिवृत्त्यर्थमुक्तिमनवरत्नकाः ।
सम्मुखवलीकृतवदः प्रसीदन्तु मये मयि ॥ १ ॥

नवरत्नप्रकाशे । चिन्तासन्तानेति । यत्पदाम्बुजरेणवः समाश्रिता देहेन्द्रियादिकं शोधयन्ति, ( वासनात्मकं लिङ्गं नाशयन्ती ) स्वन्तःकरणशोधनद्वारा चिन्तानां वक्ष्यमाणानां सन्तानो वक्ष्यमाणप्रकारेण तन्निवर्तनेपि कुसृष्टयुद्भावनं तद्धन्तार इत्यर्थः । अन्ये चिन्ताः स्वयमेव निवर्तयिष्यन्ति, चित्ताशुद्ध्या कुसृष्टयुद्भावनं ॥ चरणरेणुसमाश्रयनिवर्त्यमिति भावः । नन्विति । किंप्रकारकचिन्तोद्भवः, सम्भवतीति शेषः । इत्थमिति । अन्ये वक्ष्यमाणास्तिस्रश्चिन्ता भगवदीयानामपि हीनमध्यमाधिकारिणां सम्भवन्तीत्यर्थः । अन्याद्वित्रामप्येकां चिन्तां पूर्वोक्तेषु सम्भावितां स्वयमेव प्रमाणवाक्यैः समाधातुमाहुः आत्मनिवेदिनो हीति । एतन्निरासस्य प्रमाणवाक्यैः स्पष्टत्वान्मूलेऽकथनमिति भावः । तत्र चेति । निवेदने जाते सलौहिकसुखसाधकानि स्त्रीपुत्रवित्तादीनि पारलौकिकसुखसाधकान्यग्निहोत्रादिकर्माणि भगवदीयान्येव जातानीत्यर्थः । एवं सतीति । वित्तसमर्पणे कृते सतीत्यर्थः । देहादीति । आदिपदेन गृहादिकम् । तथा च गार्हस्थ्यनिर्वाह इत्यर्थः । इतरेणेति । निवेदनात् पूर्वमेव स्थापितेनानिवेदितेनेत्यर्थः । अस्वधर्मत्वादिति । निवेदितस्य देहादेस्तदीयार्थेन पोषणं दोषावहमित्युक्तम् । अनिवेदितेन च पोषणमस्वधर्म इत्यर्थः । दूषणान्तरमप्याहुः

अन्यधर्मत्वात् । निवेदितस्यार्थस्य स्थित्याद्यर्थं स्वस्य विचारस्याप्यनुचितत्वात् । तदभिमाने तत्सम्भवात् । एवं सति देहादिनाशसम्भवेन भजनासम्भवात्तद्वैयर्थ्यापातः । मार्ग एव चायमुच्छिद्येत । अतो निवेदने भजनाधिकारः, तस्मिन् सति तदनिर्वाह इत्युभयतःपाशा रज्जुरिति चेत् । अत्र वदामः । 'दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदनम् । एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोन्योर्थोस्यावशिष्यते' इत्यादिवाक्यैस्तदावश्यकम्, साक्षात् श्रीगोकुलेशभजनाधिकाररूपत्वात्, द्विजस्य वैदिककर्मणि गायत्र्युपदेशजसंस्कारवत् । (निवेदनस्य सार्थकत्वाय भजनसिद्ध्यर्थमावश्यकव्यवहारार्थं निवेदितस्यैव स्वार्थं विनियोगः कार्यः । ) अन्यथा दारपरिग्रहोत्तरक्षण एव तन्निवेदने कृतेऽग्रे तदविनियोगे प्राप्ते तत्परिग्रहवैयर्थ्यापत्तिः । अपरं च । दाने हि न स्वविनियोगो, न तु निवेदने । अन्यथा निवेदितान्नादेर्भोजनं न स्यात् । अनिवेदितस्य निषिद्धत्वात् । निवेदितानामर्थानां भगवद्भोगार्थं विनियोगे जाते तदुत्तरप्रसादत्वेन स्वोपभोगकृतिरुचिततरा, दासधर्मत्वात् । 'उच्छिष्टभोजिनो दासा' इत्यादिवाक्यैः । आत्मशोधकत्वाच्च । किन्तु प्रभौ निवेदितार्थस्य विनियोगे जातेऽग्रे तदर्थं यत्नः कार्यो, नवेति भवति चिन्ता । *तत्करणे

श्रीविट्ठलेशात्मजश्रीवल्लभकृतटिप्पणीसमेतम् ।

निवेदितस्यार्थस्येति । निवेदितपदार्थस्य देहगेहादेः स्थितिरादिपदेन तत्सम्बन्धीनि गृहादिकार्याणि विवाहादीनि च तदर्थं स्वस्य विचारोप्यनुचितः । तत्र हेतुः । तदभिमाने इति । स्थापनीये सतीति शेषः । देहे स्वकीयत्वाभिमाने स्थापनीये सत्येतादृशो विचारः सम्भवति । एतस्य तु देहे भगवदीयत्वमेव सम्पादनीयम्, अतः स्वस्य तद्विचारोनुचितः, भगवानेव विचारयिष्यतीति स्वस्येत्युक्तम् । तथा च देहस्थित्याद्यर्थं पूर्वमेव किञ्चित् पदार्थानिवेदनं नोचितमित्यर्थः । एवं सतीति । पक्षद्वयप्रकारेणापि देहाद्यनिर्वाहे सतीत्यर्थः । तदावश्यकमिति । वाक्येषु निवेदनकथनात् सर्वनिवेदनमावश्यकम्, नतु पदार्थविनियोगेन बाधितमित्यर्थः । बाधितत्वे भगवांश्च वदेदिति भावः । साक्षादिति । भजने सर्वाधिकारस्योक्तावपि सत्त्वन्यवहितस्यैव भजने तथा । साक्षात् पुरुषोत्तमभजने तु निवेदिनामेवाधिकार इति भावः । अन्यथेति । निवेदितपदार्थस्य स्वयमग्रहणे दारानुपयोगोपि प्राप्येत, तथा च न तथेत्यर्थः । दाने हीति । पुत्रविवाहादिकं निवेदितम्, न [1] दत्तमित्यर्थः । निवेदितोपभोगे प्रकारकथनायाहुः निवेदितानामित्यारभ्य शोधकत्वादित्यन्तम् । तथा चेयं चिन्ता तु प्रमाणवाक्यैर्युक्तिभिः परिशीलितैर्निजाचार्यपदाम्बुजरेणुसमाश्रयकृतचित्तशुद्धेः कुसृष्ट्यनुद्भावनेन च निवर्तते । अतोत्र समाधेयामन्यां चिन्तामाहुः किन्त्वित्यारभ्य

* ( किंच । तत्करणे बाहिर्मुख्यसम्भवत्र इत्यारभ्योक्तचिन्ताभावायेदमत्र विचार्यते । सेवार्थं यत्करणे बाहिर्मुख्य सेवाप्रतिबन्धश्च न सम्भवति । तस्य सेवाङ्गत्वेन तत्पूरकत्वात् तदकरणे तदसम्भवाच्च । नच

१. चिह्नान्तर्गत टिप्पण पाद्यास प्रभूणामिति प्रतिभाति ।

बाहिर्मुख्यसम्भवः सेवाप्रतिबन्धश्च । 'त्रैवर्गिका या से'तिवाक्यात् भगवत्कृतप्रतिबन्धश्च तत्र स्यात् । अकरणे निषेधाभावेन भवति च दुःखम् । एवंभूतान् स्वानुपदिशन्ति चिन्ता कापि न कार्येति ।

**चिन्ता कापि न कार्या निवेदितात्मभिः कदापीति ।**
**भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गतिम् ॥ १ ॥**

लौकिकतदभावेपि भगवदर्थापि सा न कार्या । एतदाहुः कापीतिशब्देन । अङ्गीकारेणैव सर्वं स्वत एव करिष्यतीति विश्वासो यतस्तस्यावश्यकः । भगवतोपि तथानियमः । कदाचित् परीक्षार्थं प्रारब्धभोगार्थं वा प्रभुश्चेद्विलम्बते, तदापि न कार्येत्याहुः कदापीतिपदेन । ननु लोकवत् कुटुम्बायासक्त्या स्वस्यापि लौकिकीं गतिं कदाचित् प्रभुः कुर्यात्,

श्रीविठ्ठलेशात्मजश्रीचट्टभट्टकृतटिप्पणीसमेतम् ।

भयेति च दुःखमित्यन्तेन । एवंभूतानिति । यत्नकरणाकरणचिन्तायुक्तान् उभयपक्षसमाधायकवाक्येनोपदिशन्तीत्यर्थः । तत्र समाधानं चिन्ता न कार्येति । पूर्वसिद्धानिषिद्धवृत्तौ सहजसिद्धयत्नकरणेपि तस्य यत्नस्य चिन्ता अनुचिन्तनं कथं इदं कार्यमिति मनसा सर्वथा तद्भावनं न कार्यमित्यर्थः । अग्रेपि वक्ष्यन्ति वाणिज्यादावासितौ तत्र विघ्न एव भवतीति । आसितिः कायवाङ्मनसां तदीयत्वम् । तथा चानास्थया यत्नकरणे पक्षद्वयोक्तोपि दोषो न भविष्यतीति भावः । लौकिकेति । स्त्रीपुत्रादिनिर्वाहकयत्नानास्थायामपि भगवन्निवेदनार्थकयत्ने आस्था सम्भवति, सापि न कार्येत्यर्थः । तत्राप्यास्थाया तत्सम्पादकेषु आसितिसिद्ध्या बाहिर्मुख्यं स्यादेवेति भावः । नन्वनास्थया कृतो यत्नो न सिध्येदित्याशङ्कोत्तरार्धार्थं सामान्यत आहुः अङ्गीकारेणैवेति । स्वस्यौदासीन्येपि भगवान् स्वाङ्गीकारेणैव हेतुना सर्वं यत्नं सिद्धं करिष्यतीत्यर्थः । विलम्बते इति । औदासीन्ये तत्कृतो यत्नः कदाचिन्न सिध्यति चेत्तथाप्यग्रिमयत्ने आस्था न कार्येत्यर्थः । ननु लोकवदिति । लोकस्येव कुटुम्बासक्त्या भगवदङ्गीकारस्यासिद्धत्वेन लोकस्येव स्वस्यापि लौकिकी लोकसदृशी गतिमास्थापूर्वकं विचार्य यत्नकरणे एव

'त्रैवर्गिका या से'ति वाक्यार्थत्र भगवत्कृत प्रतिबन्ध इति मान्यम् । त्रैवर्गिकपदस्यैवमर्थोऽस्ति । अन्यथा आयासवियातमित्येतावतैव चरितार्थं स्यात् । अत स्वकीयानां त्रैवर्गिकप्रयासाभावत्वमेव भगवान् करोति, न स्वसेवार्थतयासवियतमिति निश्चीयते । अन्यथा यत्नमानस्य निषेधे भजनमार्ग त्वावियेत । नन्वात्मनिवेदिनामितरयत्नासम्भवेन तज्जनितचिन्ताऽभावात् कथं चिन्ता न कार्येत्युपदेश इति चेत् । अत्रेदं प्रतिभाति । भजनमार्गे हि भगवदङ्गीकारस्त्रिविधः पुष्टिमर्यादाप्रवाहभेदेन । तत्रापि वै त्रैविध्यम् । तत्र पुष्टिपुष्टयङ्गीकृतस्य नेतरयत्नसम्भावनापि । परं मर्यादापुष्टे प्रवाहपुष्टे चाङ्गीकृतस्य तत्करणं मर्यादाप्रवाहाश, तद्विधात पुष्टपदा । तथा चात्मनिवेदिना मर्यादाप्रवाहमर्यादितानां यथेतरयत्ने कृते बाहिर्मुख्यसेवाप्रतिबन्धत द्विधात्वादिक भवति, तथा सेवार्थकेपि यत्ने आस्थायामपि भवति चिन्ता, भगवदभावश्च तत्र इति चिन्ता कापि न कार्येत्युक्तम् । अत सेवार्थं यत्न कर्तव्य इत्यपि नानुपपत्तिः काचित् । )

१ ... रीति पाठ । २ ... । ३ उपदिशन्तीत्यन्तेनेति पाठ ।

तत्राहुः भगवानपीति । यतः पुष्टिस्थोऽतो मर्यादामार्गीयवैराग्याद्यभावेपि 'महापुरुषेण निवेदिता' इति स्वकीयत्वेनाङ्गीकारात् तथा न करिष्यतीत्यर्थः ॥ १ ॥

एवं चेत्, स्वाच्छन्द्यव्यवहारापत्त्या बाहिर्मुख्यं स्यादत आहुः निवेदनमिति ।

**निवेदनं तु स्मर्तव्यं सर्वथा तादृशैर्जनैः ।**
**सर्वेश्वरश्च सर्वात्मा निजेच्छातः करिष्यति ॥ २ ॥**

सर्वदा सर्वांशे तदीयत्वानुसन्धानेन तथा न भविष्यतीति भावः । अशक्त्या सेवाद्यसम्भवेऽपीदं कार्यमेवेति ज्ञापनाय तुशब्दः । चकारपक्षे समुच्चयः सर्वथेत्यस्यावश्यकत्वज्ञापनाय । अथवा । सर्वथा ये तादृशा निवेदितात्मत्वेन तत्परास्तैः सह तथा । एतेन सङ्गदोषो निवारितः । अतादृशेष्वेतद्गोपनं सूच्यते । सर्वदेतिपाठे कालापरिच्छेदस्तत्रोच्यते । अन्यथा तदैवासुरप्रवेशः स्यादिति भावः । कदाचिदलौकिकार्थस्य लौकिकस्य वा सिद्ध्यर्थं प्रभुः प्रार्थनीय इति प्रश्ने नेत्याहुः सर्वेश्वर इति । अत्र सर्वशब्दो निवेदितात्मसर्वपरः । यथा 'सर्वे ब्राह्मणा भोजयितव्या' इत्यत्र निमन्त्रिता एव सर्वपदेनोच्यन्ते, न त्वन्येपि । सर्वात्मपदेप्येवं ज्ञेयम् । तेन सेवकाः सर्वे यथा यथा प्रपन्नाः, तथा तथा प्रभुरपि तेष्वङ्गी-

श्रीविट्ठलेशात्मजश्रीवल्लभकृतटिप्पणीसमेतम् ।

तत्फलसिद्धिरन्यथा नेतिरूपां नीतिशास्त्रानुरोधेन कुर्यादित्यर्थः । यत इति । पुष्टिः प्रवाहो मर्यादा चेति मार्गत्रयम्, तन्मध्येऽत्र पुष्टिस्थो भगवान्, अतः कुटुम्बासक्त्या मर्यादामार्गीयवैराग्यादिसाधनाभावेपि पुष्टिमार्गीयेण महापुरुषाचार्यकृतनिवेदनेन स्वीयत्वाङ्गीकारं करिष्यति । तथा चाङ्गीकारस्य सिद्धत्वान्न लौकिकीं गतिं करिष्यतीत्यर्थः । भक्तस्य पुष्टिस्थत्वायापिशब्दः ॥ १ ॥

एवं चेदिति । अनास्थायामविचारेपि फलसिद्धौ स्वाच्छन्द्येन बाहिर्मुख्यं भगवदननुसन्धानं भवेदित्यर्थः । तथा च यत्नानास्थया समाहितो दोषः पुनः प्राप्त इति भावः । निवेदनस्मरणस्य स्वरूपमाहुः सर्वदेति । 'त्वयाभिगुप्ता विचरन्ति निर्भया' इति प्रकारकस्वाच्छन्द्येपि बाहिर्मुख्यं भगवदनुसन्धानं न भविष्यतीत्यर्थः । निवेदनानुसन्धानाभावे तु बाहिर्मुख्यं स्यादेव, अतस्तदावश्यकमिति भावः । सेवादीनि । आदिपदेन कथा, तदसम्भवेपीत्यर्थः । अनायासेन फलसिद्धौ स्वाच्छन्द्येन प्राप्तस्य बाहिर्मुख्यदोषस्य निवारणार्थं निवेदनानुसन्धानमुक्तम् । फलासिद्धावपि तदनुसन्धानं कार्यमेवेत्यपिशब्दः । चकारपक्षे सर्वथेति पदेनावश्यकत्वं बोधितम् । तुशब्दपक्षे आवश्यकत्वं तेनैव बोधितमिति सर्वथापदस्य समासेनाग्रेऽन्वयमाहुः अथवेति । आसुरप्रवेश इति । 'द्वया ह प्राजापत्या' इत्यत्र यागादीनां स्वार्थमुद्गानात् पापवेधः, प्राणस्य भगवदर्थमुद्गानात्तदभाव इति तृतीयाध्याये वेधाद्यर्थभेदादित्यधिकरणे भाष्ये

१ २ न उ [illegible] । २ [illegible] । २ सर्वात्मनेति पाठ । ३. सर्वदा इति पाठ ।

कृतस्वामित्व आत्मीयत्वमेव तेषु मनुत इति तद्धितकृतौ न प्रार्थनामपेक्षत इति ज्ञाप्यते । अथवा । कालादिनियामकत्वेन न तत्कृतोपि प्रतिबन्धसम्भव इच्छायामिति ज्ञापनाय सर्वपदं कालादिपरम् । प्रार्थितोपि स्वविचारितमेव करिष्यतीति प्रार्थनाप्यप्रयोजिकेति ज्ञापनाय निजेच्छेत्युक्तम् । अथवा । निजाः स्वीयत्वेनाङ्गीकृताः सेवकास्तेषां प्रभुरेच्छातः स्वयमेवापेक्षितं करिष्यतीति न प्रार्थनापेक्षेत्यर्थः । परन्त्विच्छया अविकृतत्वमेवापेक्षितमिति ज्ञापनायान्वयप्रयोगः ॥ २ ॥

ननु भगवते समर्पितदेहादेः स्त्रीपुत्रादिषु विनियोगेन स्वधर्महानिचिन्ता बाधते, तत्राहुः सर्वेषामिति ।

सर्वेषां प्रभुसम्बन्धो न प्रत्येकमिति स्थितिः ।
अतोन्यविनियोगेपि चिन्ता का स्वस्य सोपि चेत् ॥ ३ ॥

स्वात्मना सह यावन्तो निवेदितास्तैः सहैव स्वस्याङ्गीकारात् तेषां सर्वेषामेव प्रभुसम्बन्धो, न तु प्राधान्यात् स्वस्यैवेति तत्रोपयोगे स्वस्य का चिन्ता, न कापीत्यर्थः । इयं निवेदनेऽङ्गीकारमर्यादेत्याहुः स्थितिरिति । कस्यचिद्विशेषतोऽङ्गीकारश्चेत्, सा पुष्टिरिति

श्रीविट्ठलेशात्मजश्रीवल्लभकृतटिप्पणीसमेतम् ।

विवृतम्, अतो यस्मिन्नेव काले भगवदीयत्वविस्मरणम्, तदैव देहादावासुरधर्मप्रवेशो भवतीत्यर्थः । तेन बहिर्मुख्यं भवेदेवेति भावः । आत्मीयत्वमेवेति । भगवतस्स्वात्मत्वकथनेन तेषामात्मीयत्वमुक्तम् । स्वामित्वं भगवन्निष्ठो धर्मः सर्वेश्वरपदस्यार्थः । आत्मीयत्वं भक्तनिष्ठो धर्मः सर्वात्मपदेनोक्तः । सर्वपदस्य कालवाचकत्वपक्षे कालनिष्ठो ज्ञेयः । स्वधर्मेति । स्वधर्मो निवेदनम्, तस्य हानिरित्यर्थः । स्वात्मना सहेति । प्रत्येकं प्रभुसम्बन्धे यावत्तत्सम्बन्धानामनङ्गीकारस्तावत् तत्तत्सम्बन्धयुक्ते स्त्रीपुत्रादौ स्वस्य विनियोगे दोषः स्यात्, अत्र तु सहैवाङ्गीकारात् सेवानवसरे अनिषिद्धप्रकारेण भार्याद्युपयोगेपि न स्वधर्महानिरित्यर्थः । प्राधान्यादिति । प्राधान्याद्धेतोः स्वस्यैवेत्यर्थः । का चिन्तेति । अभगवदीयसंसर्गे हि स्वधर्महानिः । तेषामप्यङ्गीकृतत्वान्न तथेत्यर्थः । तथा च भगवदीयत्वानुसन्धानेन तेषु व्यवहर्तव्यम्, न तु स्वकीयत्वाभिमानेनेति भावः । वित्तादिवद्भार्यादीनामपि समर्पणम् । परमेतावान् विशेषः । आत्मीयदेहे यथैतस्य सम्बन्धः, तथा तत्तज्जीवानामपि सम्बन्धोस्ति, अत एतेन तत्तन्निष्ठस्वसम्बन्धसमर्पणे कृतेपि तत्तज्जीवसत्तासमर्पणार्थं भिन्नभिन्नतया तत्तत्कृतसमर्पणमपेक्षितम् । एतत्कृतसमर्पणेनैतन्निरूपिततत्सम्बन्धः समर्पितो भवति, स्वस्वसहजादिदोषपश्चकनिवृत्तिस्तु स्वस्वकृतसमर्पणेन भवति । वित्तादिषु त्वन्यसत्ताभावादेतत्कृतसमर्पणेनैव निर्दुष्टत्वसिद्धिरिति । इयमिति । सर्वनिष्ठसम्बन्धैः सह स्वस्याङ्गीकार इत्यर्थः । विशेषत इति । निवेदकस्यैवाङ्गीकारस्तन्निष्ठक्रियाभिन्निरूपितसम्बन्धस्य नेति

१ आत्मनश्चा । पाठ । २ निवेदितोऽङ्गीकारेतिपाठ ।

भावः । अथवा । पुत्रादीनामन्यविनियोगदर्शनेपि स्वस्य का चिन्ता, तेषामप्यङ्गीकारेणैव कृतार्थतासम्भवादित्यर्थः । किञ्च । स्वस्येतिपदमावृत्तमपिशब्देन सम्बध्यते ॥ ३ ॥

यथा पुत्रादीनाम्, तथा स्वस्यापि सः अन्यविनियोगश्चेत्, तदापि चिन्ता न कार्येत्याहुः अज्ञानादिति ।

अज्ञानादथवा ज्ञानात् कृतमात्मनिवेदनम् ।
यैः कृष्णसात्कृतप्राणैस्तेषां का परिदेवना ॥ ४ ॥

हीनमध्यमाधिकारिभिरपि निवेदितात्मभिश्चिन्ता न कार्या भवति यत्र, तत्र कृष्णसात्कृतप्राणैश्चिन्ता न कार्येति किंवु वाच्यमित्यर्थः । केवलप्रभ्वधीनीकृतप्राणानां चिन्ताविषयाभावादेव न सेति भावः । अत एव केतिशब्द उक्तः । पदसम्बन्धस्तु अज्ञानादथवा ज्ञानाद्यैस्तत्कृतम्, तेषां सा नेतिशेषः । कृष्णसात्कृतप्राणैर्यैस्तत्कृतम्, तेषां सा केत्युक्तम् ॥ ४ ॥

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभभट्टकृतटिप्पणीसमेतम् ।

चेत्, सा पुष्टिः मर्यादातिक्रमो भगवतो नियन्तुमशक्यत्वादित्यर्थः । तदा तादृशे स्वदेहविनियोगो न कार्यः । अत एव 'प्रतिकूले गृहं त्यजे'दिति वाक्यम् । अस्मिन् पक्षे अन्यत्र स्त्रीपुत्रादौ विनियोगे स्वस्य देहस्येत्यर्थः । अन्यविनियोगेति । अन्यत्र लौकिके स्वस्त्रीपुत्रादिकार्ये विनियोगदर्शनेपि तेषां निवेदनहानिजनितचिन्ता स्वस्य केत्यर्थः । तेषामपीति । स्वाङ्गीकारेणैव क्रमेण तेषामपि कृतार्थता सम्भवति । अधुना अतथाभावेप्येकाङ्गेन भगवत्सम्बन्धात् तदनुभावेनैवास्मिन् जन्मनि जन्मान्तरे वा तया शुद्ध्या स्वस्वकृतसमर्पणेन स्वस्वसहजादिदोषनिवृत्त्या कृतार्थता सम्भवतीत्यर्थः । अङ्गीकृतस्य सर्वांशे भगवानेव चिन्तां करोतीति स्वस्येत्युक्तम् । स्वस्य त्वधुनैव सहजादिदोषनिवृत्त्या कृतार्थता सिद्धा, क्रमेण तेषामपि सम्भवतीत्यपिशब्दः ॥ २ ॥

एतमेव पक्षमाश्रित्याग्रिमश्लोकाभासमाहुः किञ्चेति । प्रथमपक्षे स्वस्य स्वकीयस्य स्त्रीपुत्रादेरपीत्यग्रिमश्लोकव्याख्याने इत्यर्थः । केवलेति । भगवदधीनजीवनानां सर्वांशे भगवदीयत्वेन विषयाः सर्वे भगवदीया एवेति भोग्यविषयेषु स्वीयत्वेनाभिमानाभावात् सा पक्षद्वयभेदेन स्वान्यविनियोगजनिता पुत्राद्यन्यविनियोगजनिता वा चिन्ता नास्त्येव, किन्तु हीनमध्याधिकारिणामपि तदभावार्थं बोध्यत इति भावः । चिन्ताभावे हेतुः पूर्वोक्त एव सर्वेषां प्रभुसम्बन्धो ज्ञेयः । आद्यव्याख्याने पूर्वं स्वान्यविनियोगचिन्ता, द्वितीये पुत्राद्यन्यविनियोगचिन्तोक्ता । द्वितीयव्याख्याने इदं विपरीतमिति विभेदः । तेषां सा नेति । स्वपदस्य स्वकीयवाचकत्वपक्षे सा स्त्रीपुत्रादिविषयिणी चिन्ता नेत्यर्थः । निवेदनपदार्थो न नश्यति, विलम्बस्तु भवत्येवेति ज्ञेयम् ॥ ४ ॥

ननु स्वस्यात्मनिवेदने हि भगवदङ्गीकारेणैव सम्पद्यते, तथा च स्वयमात्मनिवेदने कृतेपि प्रभुरङ्गीकृतवान्नवेति चिन्ता भवत्येव, इत्यत आहुः तथेति ।

**तथा निवेदने चिन्ता त्याज्या श्रीपुरुषोत्तमे ।**

**विनियोगेपि सा त्याज्या समर्थो हि हरिः स्वतः ॥ ५ ॥**

पुरुषोत्तमोऽङ्गीकृतवान्नवेति निवेदनविषयिणी या सा त्याज्या उक्तनिवेदकवदित्यर्थः । पुरुषोत्तमेन निरोधलीलायां स्वतोन्यभजनं क्रियमाणा भक्तास्तन्निवार्य स्वयमात्मसात्कृता इति तादृशे स्वयं सर्वात्मना निवेदने कृते सा शङ्का नोचितेति ज्ञापनाय पुरुषोत्तमपदम् । तथापि स्वरूपानन्ददानेनानिशं पोष्यमाणानां भक्तानां तदितरत्रोपयोगासम्भवेनैव न शङ्कोदय इति ज्ञापनाय श्रीपदम् । तथा च तदुक्ते तत्र निवेदने सा त्याज्येति भावः । कदाचिल्लोकभयाद्युपस्थितौ तन्निवारणाय जीवस्वभाववशादन्यविनियोगेपि तथेत्याहुः विनियोगेपीति । प्रमादात्तथासम्भवेपि प्रभुर्न त्यक्ष्यति । यतस्तत्स्वभाववशात्तथाभूतमप्युद्धर्तु तत्साधनानपेक्षः ॥ ५ ॥

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतटिप्पणीसमेतम् ।

इति निवेदनविषयिणीति । इति असम्पत्तिप्रकारेण निवेदनविषयिणीत्यर्थः । पूर्वोक्तापि निवेदनविषयिण्येव, परं हानिप्रकारेणोक्तेति भावः । पूर्वोक्तमेव समाधानमत्रापि ज्ञेयमित्याहुः उक्तनिवेदकवदिति । मूलस्थतथेतिपदस्यार्थोयम् । सप्तम्यर्थे वतिः । यथा निवेदके, तथा पुरुषोत्तमे इति मूलानुसन्धानेनार्थः । तथा च यथा पूर्वश्लोकोक्तरीत्या निवेदककृतान्यविनियोगहेतुकनिवेदनहानिचिन्ता त्याज्या, तथा भगवत्कृताङ्गीकाराभावहेतुकनिवेदनासम्पत्तिचिन्तापि त्याज्येत्यर्थः । पुरुषोत्तमेनेति । एतेन हीनमध्याधिकारिणां निवेदनविषयकचिन्ताभाव उक्तः । उत्तमाधिकारिणामाहुः तत्रापीति । निवेदितात्मस्वपि मध्ये कृष्णसात्कृतप्राणानामुत्तमाधिकारिणां तु परमसौन्दर्यस्य स्वगतत्वाय तादृशाकारेण प्रादुर्भूते भक्तसहिते भगवति समर्पणस्य सिद्धत्वात् तदानन्देन पोष्यमाणानां शङ्काया उदयो यस्मात् स शङ्काहेतुर्नास्तीत्यर्थः । तदितरत्रेति । अम्बिकावनगमनेपि तं दोषं निवार्य स्वसन्निधुपयुक्ताः सर्वे कृताः, रासस्थानां तु गमनमेव नास्ति । इदमङ्गीकारस्वरूपं ज्ञेयम् । तथाप्युत्तमाधिकारिणां तु भगवदीयेष्व इतरत्रोपयोग एव न सम्भवति । तस्मिन् सति हि तादृशशङ्का भवतीति भावः । तदुक्ते इति । ताभिः श्रीपदसूचितलीलाभिश्च युक्ते निवेदने सति प्रमात् प्राप्ता शङ्का त्याज्येत्यर्थः । तथा च पुरुषोत्तमे यन्निवेदनं तद्विषयिणी पुरुषोत्तमकृताङ्गीकाराभावहेतुकनिवेदनासम्पत्तिचिन्ता, तथा निवेदककृतान्यविनियोगहेतुकनिवेदनहानिचिन्तावत् त्याज्येति मूलार्थः । निवेदनविषयिणी चिन्ता निवेदके इव पुरुषोत्तमेपि त्याज्येत्यन्वयः । अन्यविनियोगेपीति । अन्याश्रयणेपीत्यर्थः । ज्ञात्वा त्वाश्रया तदपि न कर्तव्यमित्याशयेनापिशब्दार्थमाहुः प्रमादादिति ॥ ५ ॥

१ उक्तनिवेदनवदिति पाठः ।

अङ्गीकारे लक्षणान्तरमप्याहु लोक इति ।

**लोके स्वास्थ्य तथा वेदे हरिस्तु न करिष्यति ।**
**पुष्टिमार्गेस्थितो यस्मात् साक्षिणो भवताखिला ॥ ६ ॥**

कदाचित् प्रवाहवशाल्लौकिके वाणिज्यादौ, वैदिके आश्रमधर्मादौ वा आस्थितौ तत्र विघ्न एव भवति, न तु तत्फलमित्यर्थ । तत्र हेतु पुष्टीति । तद्भिनापि स्वबले नैव सर्वकर्ता यत इति भाव । पुष्टिमार्गाङ्गीकारे मर्यादा न सहत इति ज्ञेयम् । एव सति किं कार्यमित्याकाङ्क्षायामाहु[1], साक्षिवत् तत्कृत पश्यत ॥ ६ ॥

**सेवाकृतिर्गुरोराज्ञा बाधन वा हरीच्छया ।**
**अत सेवापर चित्त विधाय स्थीयता सुखम् ॥ ७ ॥**

सेवाकृतिरिति । गुर्वाज्ञाया अबाधन यथा भवति, तथा सेवाकृति पूर्वमपेक्षिता । एव वर्तमानाना कदाचिद् विशेषतो भगवदाज्ञा चेत्, गुर्वाज्ञा विरुद्धा भवेत्, तदा तथा कार्यमित्याशयेनाहु बाधन वा हरीच्छया । विकल्पेनाबाधनमित्यर्थ । एव सति गुर्वा

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतटिप्पणीसमेतम् ।

लक्षणान्तरमपीति । पूर्वश्लोके भगवत पुरुषोत्तमत्वगेतद्विषयकाङ्गीकारे लक्षण सन्देहाभावसाधकमुक्तम् । तत्र पुरुषोत्तमोपि नहि सर्वानङ्गीकृतवान्, किन्तु काश्चन तान् कृपासादविषयान्, तत्राह कीदृश इति स्फुट ज्ञातु न शक्यत इत्यधुना लोकवेदस्वास्थ्य दूरीकर्तृत्वरूप लक्षणान्तरमप्युच्यते इत्यर्थ । स्वास्थ्यपदस्यार्थमाहु आस्थिताविति । आस्थिति कायवाङ्मनसा तदीयत्वमिति लक्षणमेकादशस्कन्धे पसुयोधि[?]यामुक्तम् । तथा च मूले स्वास्थ्यमित्यत्र सप्तपदेन लोकवेदौ तन्निष्ठता न करिष्यति, सिद्धा च दूरीकरिष्यति, विघ्नसम्पादनेनेति शेष । तथा चैव विघ्नेनाङ्गीकारो निश्चेय इति भाव । आस्थितौ विघ्नकथनेन इद मम कार्यसाधकमिति ज्ञात्वा तद्विश्वासेन वाणिज्यादिकमाश्रमधर्मादिक च न कर्तव्यम्, किन्त्वेतद्द्वारा भगवान् करिष्यतीति ज्ञात्वा तदुभय कर्तव्यमिति भाव । स्वयमेव समर्थत्वात् स्वकीयाना साधननिष्ठता निवारयतीत्याहु तद्भिनापीति । ननु तथापि सिद्धस्य साधनस्य विघाते को हेतुरित्याशङ्क्य तृतीयचरणस्य तात्पर्यान्तरमप्याहु पुष्टिमार्गाङ्गीकारे इति । किं कार्यमिति अनास्थया कृतो यत्न कथ फल जनयेदित्यर्थ । साक्षिवदिति । यथा साक्षी कर्तृत्वनिवृत्त्योर्हर्षशोकरहित सन् कर्तृसम्पादित फल पश्यति, तथा हर्षशोकरहिता सन्त साधनानास्थया भगवत्सम्पादित फल विघ्न वा पश्यतेत्यर्थ । तथा च भगवानेव तस्य यत्नस्य फलजनकता सम्पादयिष्यतीति भाव ॥ ६ ॥

विकल्पेनेति । साक्षात्सेवाया सिद्धाया साधनरूपसेवायामबाधनमिति भ्यव

---

१ बाधनमिति पाठ । २ बाधेन बाधा भनसेन्द्रियणो इति

ज्ञाया श्रवणाद्ये साधने वा सेवैव मुख्या यतोऽतस्तथैव स्थेयमित्याहुः अत इति । एवं सति पर्यवसितं सुखमेवेत्याशयेन सुखमित्युक्तम् ॥ ७ ॥

कदाचित् पुत्रादिवियोगशङ्काजनितदुःखेन चिन्तासम्भवे गतिमाहुः चित्तोद्वेगमिति ।

चित्तोद्वेगं विधायापि हरिर्यद्यत्करिष्यति ।
तथैव तस्य लीलेति मत्वा चिन्तां द्रुतं त्यजेत् ॥ ८ ॥

नन्विदमखिलमशक्यमिव भाति । तथाहि । श्रवणमारभ्य सख्यपर्यन्तागतौ हि पश्चान्निवेदनवार्ता । तत्र प्रत्येकं तदेव दुरापमिति दूरतरा निवेदनादिगपि । अतस्तत्कृत-चिन्तान्यवियोगचिन्तादिसमाहितिर्निरर्थेति विचार्य साधनफले एकीकृत्य सर्वसमाधान-माहुः तस्मादिति ।

तस्मात् सर्वात्मना नित्यं श्रीकृष्णः शरणं मम ।
वदद्भिरेवं सततं स्थेयमित्येव मे मतिः ॥ ९ ॥

---

श्रीविट्ठलेशात्मजश्रीरघुनाथकृतटिप्पणीसमेतम् ।

स्थितविकल्पेनेत्यर्थः । तथैव स्थेयमिति । आवश्यककार्येऽपि कदाचित् कार्यस्य तत्परत्वेऽपि चित्तं सेवापरमेव विधातव्यम्, नतु तत्कार्यपरमिति यत्तानुचिन्तनं न कर्तव्यमिति ग्रन्थारम्भे उक्तोऽर्थ उपसंहृतः ॥ ७ ॥

कदाचिदिति । कदाचित् पुत्रादिर्वियुक्तो भवेदिति सम्भावनया जनितं यद्दुःखं चित्तस्य पुत्रादिपरता इति यावत्, तेन हेतुना निवेदनविषयिणी चिन्ता सम्भवति । तया च लोकवन्ममापि चित्तं पुत्रादिपरं जायत एवातो निवेदनं सम्पन्नं नवेति चिन्ता-सम्भवे गतिं तद्भावप्रकारमाहुरित्यर्थः । चित्तस्योद्वेगं भगवदीयत्वाननुसन्धानेन पुत्रादि-परतां विधायापि यद्यत् करिष्यति सा सा तथा तत्तत्प्रकारिकैव तस्य लीला निवे-दितां सर्वं कार्यं स्वयमेव करोतीति भावः इति मत्वा निवेदनविषयिणीं चिन्तां त्यजेदिति मूलार्थः । एतच्चिन्तास्थापने 'संशयात्मा विनश्यती'तिवाक्यात् सर्वमेव नश्यतीति द्रुतमित्युक्तम् । निवेदनं सम्पन्नमेव, परं विलम्बेन भगवतः स्वशरणं चिकीर्षि-तमिति ज्ञेयमित्यर्थः ॥ ८ ॥

तत्कृतेति । निवेदनकृता यत्करणाकरणविषयिणी चिन्तेत्यर्थः । साधनफले इति । साधनं श्रवणाद्यष्टकम्, फलमात्मनिवेदनम्, शरणागतानेकदैवैते सम्पद्येते इत्यर्थः ।

---

१ भगवद्भक्तद्वारा भगवच्छरणगमनं तदनुगन्धान च साधनम् । फलं भगवदङ्गीकारः । ततो भगवद्भक्त-द्वारा भगवच्छरणगतौ भगवता निवेदनस्याङ्गीकाराद्धि किंतु क्रमनियमाभावान्निवेदनसिद्धेस्तत्र चिन्तासाधनं ना-मयुक्तत्वादिति भावः । २ उत्सृष्टं नेयमिति पाठः ।

यस्मादुक्तरीत्या स्वतः सर्वमसामर्थ्यमतः सर्वात्मना शरणागतौ प्रभुरेव सम्पादयिष्यतीति हृदयम् । भक्तिमार्गीयान् सर्वानंशान् विचार्य तत्र प्रतिबन्धं सात्विकं च न चेत् पश्यति, तदा सर्वात्मना तथा भवति । नित्यमिति नैरन्तर्यमुच्यते । अन्यथा कालेनायुर्धर्मभ्रंशः स्यात् । अन्तःकरणे तथाभावेऽनभ्यासे वा तदा वदनमात्रस्यापि सिद्धिं ज्ञापयितुं सततमेवं वदन्नित्युक्तम् । एवं सति लोकशिक्षाप्यानुषङ्गिकी सिध्यति । एतदुक्तप्रकारेण सेवायास्तदा ध्येयनिश्चयो वा । तन्निदर्शनं न मनागपि व्याहृत 'यमेवैष वृणुते' इति श्रुतेर्मे गतिरित्येव, एतत्प्रकारविवेचनपरः ।

भक्तिमार्गे प्रवृत्तस्य दास्यार्थमिदमुच्यते ।
अन्यस्य सर्व एव तडिद्गुणमात्र नार्थिना ॥ १ ॥
भक्तिमार्गसुधासिन्धोर्विचारमथनैः स्वयम् ।
स्फुटीकृतानि रत्नानि श्रीमदाचार्यपण्डितैः ॥ २ ॥
यथोद्धृतानि रत्नानीत्थं हृदि धृत्वा भजाधिपम् ।
भजन्तु भक्ता धीमन्तो न विमुञ्चन्ति कर्हिचित् ॥ ३ ॥

इति श्रीश्रीविट्ठलदीक्षितविरचितो नवरत्नप्रकाशः समाप्तः ।

श्रीकृष्णाय नमः ।

# नवरत्नम् ।

श्रीमुरलीधरकृतविवृतिसमेतम् ।

नवरत्नसुवर्णनिर्मिता परमानन्दरसस्य बोधिका ।
हृदये वसतात् सदोर्मिशी परमोच्चग्रहरश्मिरूपिणी ॥ १ ॥
रसमयसुवर्णधारावर्षणशीला दशविधमगुणाः ।
श्रीमुरलीधरलीला मुरलीधरमानसे सन्तु ॥ २ ॥
वसु सुवर्णमयं परितः परं रसमयं च विधाय सुमण्डलम् ।
विविधनर्तनदर्शनतत्परा रसनिधिर्मयि सैव विराजताम् ॥ ३ ॥
ललिते वृन्दाविपिने वैकुण्ठादप्यतीव रमणीये ।
क्रीडसि नवरसरुचिरे श्रीस्वामिन् मम हृदम्बुजे क्रीड ॥ ४ ॥
श्रीशुकदेवरहस्यं प्रकाशितं यैरतीव रमणीयम् ।
श्रीवल्लभाभिधानैर्नवधा तेभ्यो नमोस्तु मे सततम् ॥ ५ ॥
श्रीमद्विठ्ठलप्रभुषु श्रीनवरत्नप्रकाशनिपुणेषु ।
सप्तविभक्तिरहस्यप्रकाशकेष्वस्तु मे प्रणतिः ॥ ६ ॥

अन्तःखलु धर्मप्रधानकलिदूषितसमयतीर्थकर्तृगणद्रव्यश्रद्धादीनामसाधकत्वाद्वर्द्धिष्णु-दुरवगाहपाषण्डादिनिपुणजनतासङ्गसञ्जाताज्ञानान्धकारसंभृतहृदयदरीनिविष्टविषयविषरस-संभृतानन्तसंसारसागरे निमग्नतया चेतसः स्थिरत्वाभावाद्धियुक्तरीत्या श्रवणादिसाध-नाभावान्नवधा रत्नैश्चिन्ताभावपूर्वकं तदीयत्वानुसन्धानपूर्वकं च निरन्तरमष्टाक्षरवदनकृति-साधनरूपसाध्यफलागतिसुगमां च श्रीकृष्णस्य श्रीमद्वदनरूपाः श्रीवल्लभाचार्या दैविजी-वानुद्दिधीर्षन्तः प्रथमं मध्यनायकत्वेनालौकिकश्रेष्ठभावोर्विशेषरूपया निगूढद्विमाभया आर्य-योपदिशन्ति चिन्ता कापि न कार्येत्यादिना ।

चिन्ता कापि न कार्या निवेदितात्मभिः कदापि ।
भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गतिम् ॥ १ ॥

वसन्तादिपूर्णरसमयषडैश्वर्यादिमूर्तिमद्भिः सेवितस्य गोरसदानादानप्रवीणस्य द्वादशसुवर्णरत्नराशिकल्पतरुस्कन्धारूढस्य श्रुतिगीतद्वादशमाससंवत्सरादिरसमयसमयप्रा-दुर्भावकस्य गायकपरित्राणनिपुणैकव्यक्तिपदमात्रात्रिचोदितसकलसुषमास्पदकीर्तिप्राकट्य-कारकस्य सप्ताक्षरव्यञ्जितोत्तमवासरस्य त्रिभुवनललितमाधुर्यादिसुगन्धफलतामधुपानप्रवीण-

घट्पदस्य स्वीयजनानामाधिदैविकसकलज्योतिषामानुकूल्येन चिन्तानिवर्तकस्य द्वितीयचरणमात्राविद्योतितत्रयोदशमाससवत्सरस्य लौकिकसकलशुभकर्मानर्हस्याप्यस्य भगवद्भक्ताधिक्यद्योतकस्य तथाधिकमात्रायास्त्रयोदशीत्वेनानङ्गस्यापि साङ्गतासिद्धिबोधकस्य उत्तरदलाद्वैलक्षण्यद्योतनायाधिकैकमात्रस्य वा। सा मात्रा तु गायकपरित्राणसमर्थेयं, प्रथमचरणे गूढा न्यासे द्वितीयचरणे च प्रकटीकृता। अत्र च याकारे आकृतिरूप निगूढवासुदेवपदमुत्तरान्वयि गूढमासमन्तात् सर्वप्रकारेण निवेदित आत्मा यैरित्यर्थात्। अत एव यद्पदत्वमुक्तम्। तस्य चरणान्तत्वेन गुरुत्वामनत्वे सत्येकादशेति प्रथमचरणेन साम्यम्। अनेन मलिम्लुचातिरिक्तैकादशमासाना सङ्ग्रहोपि द्योतित । द्वितीयचरण तु नवोदस्मान सममेव, निपदायास्तृतीयान्त्यस्य व्यञ्जनस्य न्यासेऽगणनाद्याकारस्य वैकल्पिकत्वाम नत्वे द्वादशमाना। अकारोप्यत्राकारात्पूर्वं प्रश्लिष्टो येष सकलवाङ्मय। अस्या गायत्र्याश्च तुरीयस्य तुरीयनिगमवेदैकत्वाभवात् त्रिचरणै साम्यम्। अस्यास्त्रिचरणाया श्चालौकिकश्रेष्ठभानुप्रकाशत्वम्। एकस्मिन्नक्षरे मध्यस्था दिव्यव्यक्तिरव्यक्ता पूर्वोत्तरान्वयिनी। पूर्वान्वयित्वे यशोदो:सङ्ग लालिता व्यक्तिरुत्तरान्वयित्वे कीर्त्यङ्कलालिता व्यक्ति-र्व्यञ्जिता वेद्या। अङ्को ह्यानन्दात्मा विद्यारूपो भगवत्साकल्यस्थानम्। व्यक्तिद्वयेप्यङ्कस्य समत्वात्। सकलवाङ्मयाक्षर एकस्मिन्नेकाङ्क। द्वितीयाद्या व्यक्तौ द्वितीयत्वेपि तज्जातित्वेनाद्वयत्वादेकाङ्क। एव चैकाङ्कस्य द्वित्वे ह्येकादशी कृष्णवल्लभा प्रकटा भवति। तथा च दलद्वयस्याद्यन्तरहितत्वेन वर्तमानता उत्तरोत्तर वर्तमानस्यैव रसावहत्वात्। योगबलेन भूतभविष्यत्पदार्थयोर्वर्तमानत्वेपि सर्वेषा तथात्वाभावात्। अत एव यथोत्तर मुनीना प्रामाण्यमिवेचोश्रोतरभूयस्त्वमिवान्तिमवर्णेऽर्थपर्यवसानमनुभवसिद्ध रसावहम्। अतो वाक्यपदीये 'पदेन वर्णा विद्यन्त' इत्यादि। किञ्च, दीर्घे मानाद्वयम्, श्रवने त्रयमिति हरि पञ्चधा इह द्वितीयचरणे मात्रात्रय शुभम्, तद् द्वितीयव्यक्तया व्यक्तीकृत कदापीतिपदेनेति। न हि कदापीतिपदमेकम्, किन्तु पदत्रयम्। एवञ्च कदाप्येतस्मात् पदद्वयात् यदितिपदमाचार्ये शेषत्वेन पूर्वोक्तसकलप्रकारबोधक ह्येव स्थापितम्। गायत्रीमात्रार्थसाम्याय तत्सारमद्वितीयव्यक्त्या व्यक्तीकृत वेद्यमिति भाव। द्वितीयचरणान्त इति पदे सति पञ्चदशमात्राभिस्तिथय इति कृष्णजन्मपक्ष। पदैर्भूतभविष्यद्वर्तमाना एतत्सकलरहस्यार्थबोधकस्य 'क्षय कार्तिकादित्रये नान्यत स्यात् तदा वर्षमध्येऽधिमासद्वय चे'ति सवत्सरस्यास्य मासास्त्रयोदशेति सोपि सगृहीत। इति पद्यात्क्ये गूढा षोडशकला द्वादशकले प्रविशन्ति। तृतीये मात्राभि सूर्यस्य कलानामक्षरैर्मासाना पदै प्रातरादीना प्रयाणा द्योतकस्य तुर्ये मात्राभि शुक्लपक्षद्योतकस्य रुद्रसङ्ख्याक्षरैर्मलिम्लुचातिरिक्तमासाना च पदैर्हरे पञ्चात्मकत्व स्पष्टयत, प्रात सङ्गममध्याह्नापराह्णसायाह्नाना च द्योतकस्य,

दिनमणेरुत्तरपदमात्रस्य भावप्रयोगात् (?) स्वार्थिके कनि सत्याद्युदात्तस्य माणिकस्य रसेन परिपूर्णस्य सम्बन्ध्यानन्दात्मकरसस्य प्रतिपादकतया आर्याविशेषरूपाया मध्यनायकरत्नबोधिकाया अपि तद्रूपता वेद्या । वेद्यवेदकयोः संपृक्तत्वात् । एवमग्रिमेष्वपि वेद्यम् । श्रीकृष्णस्य हरेः पञ्चविधत्वं श्रीप्रभुचरणैर्निबन्धे उक्तम् 'अग्निहोत्रं तथा दर्शः पूर्णमासः पशुस्तथा । चातुर्मास्यानि सोमश्च क्रमात् पञ्चविधो हरिः । तत्साधनं च स हरिः प्रयाजादि स्रुगादि यत् । प्राकृतं रूपमेतद्धि नित्यं काम्यं तु वैकृत' मिति वेदार्थस्य पञ्चधात्मकतां सूचयितुं हरिनामाक्षराणि चत्वारि भक्तजनदुःखहरणदक्षाणि समूहरूपेण पृथग्वर्णाभावरूपं च पञ्चममिति पञ्चधा हरिः । तथा कृष्णनाम्नि वर्णाः पञ्च । पञ्चवर्णोऽग्निरिति स पञ्चवेदादिरिति पञ्च, अस्यासनत्वं पशूनामगम्यत्वाय सूचितम् । भगवतः भक्तानां तु विद्यात्मकसुखारविन्दपार्श्वे प्राप्य कृतार्थता भवति । रमन्ते भक्तानां मनांसि यत्र तद्रत्नम् । प्रत्येकं रत्नेषु नवस्वेपि क्रमो विवक्षितः । श्रेष्ठमानोः समयपरिच्छेदकज्योतिषां प्राधान्यात् तद्रत्नस्य मध्यनायकत्वम् । आर्याविशेषरूपछन्दसा द्योत्यद्योतकयोः श्रेष्ठत्वसूचनात् ।

अर्थस्येयमतिश्रेष्ठा श्रेष्ठमानो रसात्मिका ।
विशेषरत्नतापन्ना चतुरत्नप्रकाशिका ॥ १ ॥
मध्यस्था प्रथमं प्रोक्ता श्रीमद्वल्लभदीक्षितैः ।
सोर्पश्री राजतां नित्या मुरलीधरमानसे ॥ २ ॥

अष्टरत्नप्रधाननवमस्योर्धशीर्त्वं प्रधानतयोक्तं माणिक्यस्य ।

रसमध्यसुवर्णनायिका परमाणिक्यतया निरूपिता ।
हृदये मुरलीधरस्य सा लसताश्लिस्यमनन्तवैभवा ॥ ३ ॥
त्रिचरणसमगायत्री तुरीयचरणेन संयुता तत्त्वम् ।
वेदानां प्रसवित्री मुरलीधरमानसे प्रकाशयताम् ॥ ४ ॥ १ ॥

दिनमणेर्दिनप्रधानस्य रत्नमभिधाय क्षणदाप्रधानस्य कृष्णसाराङ्कस्य स्वात्ममृतबिन्दुरूपं मुक्ताफलमिदं द्वितीयं रत्नमाहुः निवेदनं च स्मर्तव्यमित्यादिना ।

निवेदनं च स्मर्तव्यं सर्वथा तादृशैर्जनैः ।
सर्वेश्वरश्च सर्वात्मा निजेच्छातः करिष्यति ॥ २ ॥

स्मरणं चन्द्रेच्छे च मानसे । एवं च 'अहं तवास्मि' इति निरन्तरं स्मर्तव्यम् । तच्च भगवत्प्राप्तौ मुख्यं निमित्तम् । तेनाविकृतषोडशदल आधिदैविको भगवन्मनश्चन्द्र आधिभौतिकेऽविकृते सत् विद्यात्मतां याते अक्षरात्मनि व्यापके पञ्चदशकलत्वं प्राप्ते सेवकमनश्चन्द्रे निविशते, तदा षोडशकलो भवति । अत एव षोडशसङ्ख्याकाक्षराणाम् । अत

१. जयतादिति पाठ । २ निवसत इति पाठ ।

एव रसिकशिरोमणिभिः श्रीहरिरायैः 'यद्ध्यानाच्चेतोपि च षोडशफलमञ्जसा भवति' इत्युक्तम् । इहापिशब्दाच्चितुरुक्तहृद्वाराणां तत्सङ्ख्याकानां चतुःषष्टयक्षरात्मिका कला सम्पद्यन्ते । सर्वथा तादृशैः कायवाङ्मनोभिरनन्यतया ये भवन्त प्रपन्ना तादृशैरिति सहार्थे तृतीया । यद्यपि स्मरणे सङ्गापेक्षा नास्ति, तथापि तादृग्भिः सह सङ्गनिवृत्त्यर्थं तथोक्ति । सर्वसेवकानामीश्वरत्वेन निरोधकत्वात् तेष्वेव दैवेषु आत्मत्वमात्मीयत्वं च मनुते । अतो 'निजस्य नैजाना चाविकृतेच्छात' इत्युक्तं प्रकाशे । भगवदिच्छा परीक्षार्था तात्त्विकी नेत्यविकृतोक्ता । स्वतन्त्रप्रवाहमर्यादयो रत्ने शोकोत्पादकत्वात् शोकाश्रयत्वात् वा शुक्तित्वम् । क्षीणे पुण्ये मर्त्यलोकनिवेशयोग्यत्वात् शोकजनकत्वम् । करिष्यतीति सामान्योक्त्या केषुचिदविलम्ब, केषुचिन्मध्यविलम्ब, केषुचिदतिविलम्ब इति द्योत्यते । वर्तमानसामीप्ये भविष्यत्प्रयोगात् प्रथम पक्ष, इतरौ तु सामान्यप्रयोगाद्वेद्यौ ।

उपरितनमर्यादा शुक्तिरधस्तात् प्रवाहरूपा च ।
उभयो' सम्पुटगर्भे स्वातिरसार्द्रं विरत्नरत्नेव ॥ १ ॥
उपरि महामर्यादाधस्तनशुक्त्या तु सम्पुट याता ।
पुष्टिर्मुक्ता मध्येऽससृष्टा निर्गता ततः शुद्धा ॥ २ ॥
पुनरनयोर्न प्रविशति भगवद्रूपासु ससक्ता ।
इत्थं मुक्तारत्न द्वितीयमथ द्वय वेद्यम् ॥ ३ ॥
प्रवाहवेदमर्यादाशुक्तिसम्पुटनिर्गताः ।
कलानिधे रत्नरूपा मुक्ताः स्वातिरसात्मिकाः ॥ ४ ॥
भवन्तु भावे सरसे तासां मम रसात्मनः ।
सदा येन भवेद्भावो भूषणे भूषणे विभो ॥ ५ ॥
प्रशस्तपुष्पवद्रत्ने सर्वरूपरसान्विते ।
श्रीकृष्णहृदये भाते भासेतां हृदये मम ॥ ६ ॥ २ ॥

रसवर्षणभावद्वादशात्मककृष्णसाराह्लादकरसरत्नाभ्युदयमात्रेण प्रफुल्लतां प्राप्तवतो, अत एव प्रशस्तयोरत्युत्कृष्टरमार्णवशरत्स्वरूपयो कमलयो पुष्पयो सदा विद्यमानसाययोर्गोविप्रप्रतिपाठकत्वशमवर्तकयोरलौकिकयो सकलभुवनाप्यायकत्वेन पुष्टिप्रदयो सूर्याचन्द्रमसो सदानन्दरूपे रत्ने अभिधाद तृतीया सेवकव्यक्ति विना सेव्यलीलानुदयात् पूर्वोत्तरान्वयिनीं सदानन्दमध्यस्था चिदानन्दाक्षरदैवजीवसम्बन्धिदेहरूपविद्रुमारया मध्यपुरुषबोध्यामादिगन्ता रत्नव्यक्तिमाहु सर्वेषामिति ।

**सर्वेषां प्रभुसम्बन्धो न प्रत्येकमिति स्थितिः ।**
**अतोऽन्यविनियोगेऽपि चिन्ता का स्वस्य सोऽपि चेत् ॥ ३ ॥**

---

१ अन्न इति पाठ । २ सदा विद्यमानसाययस्थरत्नरूपयोरिति पाठ ।

वसुन्धराप्रधानानां प्राकृतानां स्वस्वीयदेहानां परब्रह्मसम्बन्धादलौकिकतां यातानामक्षरस्वरूपत्वेन चिद्रूपसात्त्विकानां विशेषेण मङ्गलद्रुमरूपता भवति । सा तु श्रीकृष्णाभरणत्वेन । किञ्च, द्रवतेर्गत्यर्थकत्वेनान्यत्र विनियोगसम्भव उक्तः । न हि स वस्तुतो भवति । यतोऽलौकिकद्युतिपकेन प्रभुचरणारविन्देन स्वसेवकमनोमत्तमातङ्गस्य स्वस्मिन्नेव स्थापनाय निलाङ्कुशधारणं कृतम् । अत उक्तं ललिते 'एतत्पदपङ्कजमधुमत्तस्यायं निसर्ग एवाभूत् । नेतरभावं भजते यदङ्कुशो नित्यमेवास्ती'ति । प्रभोरिच्छायाः सर्वकार्यकरणसमर्थाया यः सम्बन्धः स परब्रह्मणः समत्वात् सर्वत्र समः । ईदृग्देहानां मङ्गलमन्दिरवेदत्रयात्मकाक्षराधारत्वेन मङ्गलरत्नत्वम् । स्वयं विराजमानत्वात् ।

भौमानां विद्रुमत्वं भवति निजपरस्वीयदेहादिकानाम्
कृष्णेऽद्धा स्वार्पितानां रसमयपरमालौकिकानां स्वभर्तुः ।
स्वीयाचार्यस्य मार्गे परमगुणगणालङ्कृता भूषणार्हाः
सेवायुक्ता यतस्ते रसमयवपुषो जङ्गमाः कल्पवृक्षाः ॥ १ ॥

सचिवे ता भवन्तु प्रणयरसभरा उर्वशी रत्नमध्यात्
धात्र्यायां वीथिकायां हृदयपरिसरे रत्नरूपाः सुवर्णे ।
इत्थं रत्नं तृतीयं नवसु निगदितं पूर्णकामाप्तमानम्
तस्मै दिव्याय मे स्वात्म इह परमानन्दलाभाय नित्यम् ॥ २ ॥ ३ ॥

ननु मध्यहीनाधिकारिभिः स्वयं ज्ञात्वा स्वदेहस्यार्पितत्वेपि पुत्रादीनां ज्ञानाभावात् तद्देहानामज्ञानावृतचित्तत्वेन लौकिकत्वादन्यविनियोग एव भवतीति भवति-चिन्तेति पुत्रस्य सेवकजनशिक्षकस्य महापुरुषस्य निवेदकस्य प्रभावादज्ञानकृतनिवेदितदेहानामपि चिन्ता न कार्येति मरकताभिधं तुरीयं रत्नमाहुः अज्ञानादिति ।

अज्ञानादथवा ज्ञानात् कृतमात्मनिवेदनम् ।
यैः कृष्णसात्कृतप्राणैस्तेषां का परिदेवना ॥ ४ ॥

अज्ञानस्य व्युच्चरणोत्तरक्षण एव सम्बन्धात् प्रथममुपादानम् । तथावरकत्वात् सङ्कर्षणनिचोलनिभम्, यतः ज्ञानात् प्रकाशकत्वेन मार्त्तण्डप्रायात् सच्छाद्देतुभूतात् कृतं देहादीनां परमात्मने समर्पणम्, श्रीकृष्णाधीनकरणं प्राणानामविकृतमव्ययत्वाद्वेयम् । अतस्तस्मै हितः प्रत्ययः सातिशय वेधः । पुत्रेऽज्ञानाद् ज्ञानादर्पितं स गृह्णाति, पुत्रत्वेन वैषम्याभावात् । तदीयत्वेन रत्नमपि तादृशम् । प्रियतेऽनेनेत्यहन्ताममतात्मको विविधदुःखदो मनोदेहेन्द्रियविकृतिजनकः संसारो मरः, तस्य कतो नैर्मल्यजनकः । यतः कं निरतिशयानन्दः, तं तायति तनोति वा उपलयान्तः । मनोदेहेन्द्रियादीन् स्वभावतो मलिनान्

१. भास्करेति पाठः ।
५ म. ए.

कतकापरपर्यायनिर्मलीकृतघनरसं शोधयति, तथेदमपि । अतः प्रमाणरूपरामेण तार्क्ष्यवर्णवसनं धृतम् । अज्ञं सुज्ञं वा पण्डितत्वादनुगृह्णाति ।

सरस्वतीरूपनिचोलरामसाङ्गे य आनन्दमये रसायाम् ।
श्रीबालकृष्णो रमते यथेच्छं तं पूर्णकामं प्रणमामि देवम् ॥ १ ॥

बुधो विद्यारूपः प्रकटपरमानन्दजनको
निचोलं यच्छीलं सकलरसशृङ्गारविभवम् ।
धृतं येन स्वच्छं मरकतमणिप्रख्यमतुलम्
स मे चित्ते भूयादखिलतिमिराज्ञानदलनः ॥ २ ॥
निकुञ्जे मल्लीनं सरसरमणीनां हृदि तटे
प्रसिद्धं वृन्दाया विपिनभुवनेत्र प्रतिदिनम् ।
प्रमेयं विख्यातं दशरथरसालङ्कृतवपुः
महातेजःपुञ्जं मनसि मम भूयादनुमितम् ॥ ३ ॥
मरकतमिह रत्नं यदुघरोत्तमेत-
त्प्रभवतु मम चित्ते शोधनाय प्रकामम् ।
गुरुचरणसमर्प्या स्वापया पुण्यकर्त्री
सकलदुरितहर्त्री सर्वकामप्रदात्री ॥ ४ ॥

इति कुपस्य मरकताख्यं चतुर्थं रत्नम् ॥ ५ ॥

स्वनघः कर्ता सकलशास्त्रमर्मज्ञः श्रीजिनेन्द्रनः पूर्णपुरुषोत्तमोऽर्चितमहीमहतवान्, न वेत्ति संशयमुरिधीर्यो मुकुन्दमुखारविन्दनेत्रोनिधिरूपा. श्रीशास्त्रस्य आचार्याः सर्वदा

येनाममामित्वेन तदीयत्वात् । एवं ब्रह्मानन्दादुद्धरणं पदार्थमात्रस्य वेद्यम् । भजनानन्दे योजनं तु पूरणात् पुरुषधर्मः ।

पूरणात् पुरुषतामनवद्यामुत्तमां समधिगम्य रमेशः ।
सोऽयमत्र नहि मुञ्चति भक्तान् क्रीडति प्रतिदिनं हृदयेषु ॥ १ ॥
पुष्यति प्रतिदिनं हृदये वै येन राग इह भक्तजनानाम् ।
तद्धरो रसमयं पररत्नं पुष्पराग इति मे मनसि स्यात् ॥ २ ॥
स्वस्य स्वीयजनस्य वा परवशत्वादन्ययोगो भवेत्
दैवादत्र सदा तदा निजजनैश्चिन्ता न कार्या यतः ।
सामर्थ्यं पुरुषोत्तमस्य सततं श्रीमत्गुरुर्व्याहृतम्
जानीयादिति पुष्परागरचना मे मानसे भासताम् ॥ ३ ॥
इति पुष्परागाख्यं पञ्चमं गुरुदेवस्य रत्नम् ॥ ५ ॥

अहं ममेत्यसद्ग्राहेण लोचति यस्मिन्निति लोकः, पुनः पुनरावर्तनदः प्रवाहमार्गः । अत्र लोचनं नामाहन्ताममतयोरेव विशेषज्ञानम् । तत्र व्यवहारे क्रियमाणे सेवकस्य स्वयनाशनाथ फलं न भवति, किन्तु लोके व्यवहारेण फलाभावात् खेदे सति हरिः करिष्यति, तदेव भविष्यतीति निश्चये जाते भगवान् पुष्टिमार्गे एव तिष्ठतीत्यनायासेन सकलमनोरथाः सेत्स्यन्तीति तटस्थतया सेवकैः स्वेयमित्युपदिशन्ति, मर्यादामार्गेऽपि स्वय-नाशनायोपदिशन्ति लोके स्वास्थ्यमित्यादिना ।

लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति ।
पुष्टिमार्गस्थितो यस्मात् साक्षिणो भवताखिलाः ॥ ६ ॥

भक्तानां स्वयनाशनेन सकलं दुःखं हरतीति हरिर्यतोऽयं तृतीयमार्गस्थः । मर्यादा-मार्गे देशादीनां कृष्णाश्रयोक्तरीत्या साम्प्रतमसाधकत्वात्, तत्र प्रत्युत प्रत्यूहमेव करोति परीक्षार्थे, स्वतन्त्रेच्छत्वाच्च, पुष्टिमार्गस्थितत्वेन सुखमेवान्ततः प्रयच्छतीति पुरुषार्थद्वयं सम्पद्यते । अन्यथा विततानेकविध्युक्तसाधने क्लेशेऽपि फलाभावे सुतरां क्लेशः । तस्मात् स्वयं कविनाज्ञा रसाधायकरीत्या अलौकिकं न केनाप्यपनोद्यं फलं प्रयच्छतीति भावः । अत एव कवेर्वेज्ञरत्नेन भजति पर्वततुल्यं किल्बिषं गच्छत्यनेनेत्यन्वर्थेन सर्वं सेत्स्यतीति साक्षितया सेवकैस्तत्कृतिं पश्यद्भिरेव स्थेयम् ।

वाणिज्यादौ च वेदे विविधविधिकृतौ विभ्रमेवेति वेद्यम्
यस्मात्तस्मात् फलं वै न भवति नितरां कर्तुरस्य कृपापाः ।
अन्तःसम्भूयोऽभिमानो न भवति सुतरां मानसं वज्रतुल्यम्
नीरीभूतं यथा स्यात् फलमपि भवति श्रीशनिष्ठं यतस्तत् ॥ १ ॥

१. प्रतिक्षणमिति पाठः । २. वेदे इति पाठः । ३. भवतीति पाठः ।

पर्वतसदृश किल्बिषमिह जातं भक्तवर्गस्य ।
व्रजति त्वरितं वज्रादिवन्वर्थे कवे रत्नम् ॥ २ ॥
साक्षीवत्कृतिमादराद्भगवतो यूयं सदा पश्यते
त्येव सिध्यति सर्वमीप्सिततम कार्ये फलं कर्तृतः ।
पुष्टिं श्रीपुरुषोत्तमादुपदिशन्त्यद्धा तदात्मका
आचार्या इह वैष्णवान् स्वकुलतोप्यन्यानन्याश्रितान् ॥ ३ ॥
मर्यादात्यजनं विरुद्धमिह यत्तत्त्व परं ये विदुः
पुष्टेः किन्तु दरिंमरित्वमिति तद् स्वीकृत्य पुष्टिं गताः ।
दुष्टास्ते दयया सदा विरहिता वेदाक्षरान् वाचय-
न्त्यद्धाज्ञान्गुरुमीश्वरं सुपदिशन्तीशस्य चाज्ञांद्रुहः ॥ ४ ॥
इति कवे शुकस्य रत्न षष्ठम् ॥ ६ ॥

कविर्ज्योतीरूपो देवः सुरासुरभावज्ञ आसुरभावं निन्दयन् दैवभावं स्तुवन् स्वर-त्नेन । एवं च प्रह्लादादिष्वासुरत्वेपि तद्धर्माभावादनुग्रह, अन्येषु निग्रहोपि सूचितोऽनेनेति । दैवैः किं कृत्वा श्रेयमित्यादिसन्देहान् सारिरत्नेन निवर्तयन्ति सेवाकृतिरित्यादिना ।

सेवाकृतिर्गुरोराज्ञा बाधनं वा हरीच्छया ।
अतः सेवापरं चित्तं विधाय स्थीयतां सुखम् ॥ ७ ॥

गृणाति परमात्मनस्तत्त्वमिति गुरु, 'गुरुं न मर्त्यं मन्येते' ति वाक्यात् तदुपदिष्टमार्गेण रसमयी सेवा विधेया । तत कदाचिद्भगवदनुग्रहवशात् सेवकस्य विशेषेच्छाया भावरूपा भगवदिच्छा विशेषाकृतिरूपेण तन्मनस आकर्ष्यमाणोति, साक्षा भगवदिच्छेत्यनुमित्या मन्तव्या सेवकै । एवं हि गुर्वाज्ञाबाधनमबाधनं वा हरीच्छया भवतीति भाव । इन्द्रनीलाख्य त्वतिमन्थरगते सर्ववर्णरत्नपनोधवर्णे तमसाप्यनुपनोध च सर्ववर्णरत्वात् । इन्द्र परमात्मा परमैश्वर्यवान् सकलरसाया जीवनरसतर्पणशील, अत एवाद्युदात्तस्तद्वदतिनिबिडश्याम-सुन्दरमूर्तिं, तस्येदम् । अनेन श्याममुन्दरसेवाया मन प्रभृतीना वृत्तयोऽन्याभृततया मन्थरगतयो रसमयशिरविपुलतारूपा भवन्त्यत उक्त सेवापरं चित्तं विधाय स्थीयतां सुखमिति । निबिडरसकृतसेवाया मन्थरा गतिर्भवतीति सेवामक्त्या सकल सिध्यतीति व्यञ्जितम् ।

गुरुणा परमेश्वरेण या कथिता सर्वरसप्रदायिनी ।
परमा तनुसेवना तथा वसुना स्वस्य च सा परा मता ॥ १ ॥
यदि सा ऽधिका ततो भवेन्मनसस्तस्य परात्मन प्रभो[१] ।
परमेष्टतयाऽगम्यता निजमर्कटवरध्य चेन्द्रियम् ॥ २ ॥

---

१ आत्मइह इति पाठ ।

स्थिरतामुपगम्य सेवयावसरेऽन्यत्र कथारसैस्तथा ।
रविनन्दनरत्ननीलतां रमणीयां हृदये विचिन्तयेत् ॥ ३ ॥
इन्द्रनीलमणिवद्विराजिता सर्ववर्णसमवायदेवता ।
मन्दमन्दगतिमद्रसान्विता मे मनस्यविरतं विराजताम् ॥ ▪ ॥

यद्यप्यनेन भगवत्सेवायां देहेन्द्रियाणां स्थिरतोपदिष्टा, तथापि 'यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः । इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः । इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि' इत्यादिवाक्यैर्वायोरिव मनसो दुर्ग्रहत्वेनानेकदुःखोत्पत्त्या चित्तोद्विग्नतायां सेवाया असम्भवात् तन्निवृत्त्यर्थं गोमेदाख्यं विधुंतुदस्याष्टमं रत्नमाहुः चित्तोद्वेगमित्यादिना ।

चित्तोद्वेगं विधायापि हरिर्यद्यत्करिष्यति ।
तथैव तस्य लीलेति मत्वा चिन्तां द्रुतं त्यजेत् ॥ ८ ॥

सांसारिकानन्तदुःखजन्योद्वेगस्य चित्तधर्मतयाऽवश्यं प्रथमं भवनमित्यकृतोपि स कृतो भवतीति वक्रोक्तिः । तदुक्तं सेवकस्य यत्कर्तव्यं तदाहुः हरिर्यद्यत्करिष्यतीत्यादिना । सेवकानां सकलदुःखहर्ता हरिर्यदनेकविधं दशललिततलकाख्यकृतिबोधितफलाश्रयं करिष्यति, तथैव तस्य हरेर्लीलेति मनसि ज्ञात्वा चिन्तां शीघ्रं विसृजेत् । विधौ लिङ् । विधिः कर्तव्यार्थोपदेशः । करिष्यतीति वर्तमानसामीप्ये लृट् । अनेन वर्तमानकार्यं भविष्यत्कार्यं सकलं भगवल्लीलेति सेवकैर्मन्तव्यमिति भावः । अतीतसमये स्मृतिमात्र आनन्द उपलक्षणत्वेन वेद्यः । वर्तमानस्यानुभूयमानागणितानन्दत्वे रसाधायकत्वम् । भविष्यति तु गाविति कार्येऽप्युत्कण्ठितं मन इति रसाधायकत्वमिति त्रिष्वपि समयेषु यत्कार्यम्, सा लीला । एवं च सदा चिन्तात्यागे गवामिन्द्रियाणां तेषामाधारस्यारूपस्थूलदेहस्य गोपकन्यानां च स्नेहात्मकभेदो वृद्ध्या गोमेदो विधुंतुदरत्नप्रकाशकस्यास्य भवति । किंच, भगवत्सेवकमानसचन्द्रस्य भगवद्वियोगजरसं रूपस्फूर्त्या तत्तल्लीलायाः स्मरणात् तन्मयत्वेन प्रसभूयं लब्ध्वा परमभगवदासक्तिरविलम्बेन भवतीति श्रुतिरहस्यार्थोऽनेन व्यञ्जितः ।

चिन्तात्यागजनकत्वमनेन विदुषां वाणीहृषीकादिकाः
पुष्टिं यान्ति निरन्तरं विधुमनःखेदं विधायाद्भुतम् ।
शीघ्रं प्राप्तिरतो यतो भगवतो लक्ष्मीपतेरात्मा
गोमेदाभिधरत्नरूपत इदं मे मानसे भासताम् ॥ १ ॥
गोपालगोरक्षणधर्महेतोर्निरन्तरमद्गीकृतमत्र विद्वन् ।
वसुन्धरां गां परिपालनाय हतास्तनात्त्वमुपेक्षसे कथम् ॥ २ ॥
मद्भाग्यदेवासु निजेषु कश्चिद्वियोगजन्यः सुरतानताय ।
नो चेत् कथं मे विरहं निरं स्याद् कृपानिधेऽनन्त मदग्र विद्वन् ॥ ३ ॥

इति मुरलीधरवाण्या देहरूपीकाणि पुष्टिमुपयान्तु ।
मुरलीधरस्य सततं श्रीगोपालप्रसादेन ॥ ४ ॥

इत्यष्टमं गोमेदाख्यं रत्नम् ॥ ८ ॥

नन्विदानीन्तनानां सेवकानां श्वः श्वः पापिष्ठदिवसत्वेन देशादीनां साधकत्वाभावात् श्रवणादीनां सम्यक्तयाऽसम्भवात् पूर्वोक्तप्रकाराणां सुतरामसम्भवाच्च कथं फलप्राप्तिरित्याशङ्का सा भवत्यनायासेनेति तत्प्रकारः त्रिसूत्रापरपर्यायेण नवमेन वैदूर्यरत्नेनाहुःतस्मादिति ।

तस्मात् सर्वात्मना नित्यं श्रीकृष्णः शरणं मम ।
वदद्भिरेव सततं स्थेयमित्येव मे मतिः ॥ ९ ॥

यस्मात् पूर्वोक्तं कर्तुमशक्यम्, तस्माद्धेतोः सर्वात्मना वाचा व्यक्ततया मनसाऽन्तरव्यक्ततया तदर्थानुसन्धानपूर्वकं सदा आसुरावेशाभावायाष्टाक्षरमुच्चारयद्भिरेव सेवकैः स्थेयम् । यथा मनसोऽन्यत्र वृत्तिर्न भवति, तथा विधेयमिति मे मनीषाऽस्तीत्युपदेशः । अयं भावः । श्रीकृष्ण इति विशेषणम्, शरणमिति विशेष्यम्, त्र्यक्षरं सूत्रद्वयम् । ततः समसम्बन्धबोधकं द्व्यक्षरमपि परोक्षास्तिना त्र्यक्षरीति नव । किञ्च । जीवात्मनः सम्बन्धबोधकं द्विधा, अव्ययमनव्ययं च । अव्ययात् विकाररहितात् पुष्टिमार्गीयसिद्धा पुष्टिमार्गीयाणाम्, साध्येतरेषामिति भावः । भक्तबोधकादनव्ययाच्च प्रवाहमार्गीयभक्तबोधकादस्तीति लीलाबोधकं पदमस्त्विति वा शेषत्वेन विज्ञैर्विज्ञेयम् । एवं च सलीलाप्रकाशकत्वेन सह त्र्यक्षरी तृतीयेति नवाक्षरी परमावधिसङ्ख्या वेद्या । एता ब्रह्मसूत्राक्षररूपाः सङ्कर्षणप्रद्युम्नानिरुद्धैर्धृताः, सदैव शिखायज्ञोपवीतधारणं ब्रह्मवैवर्ते व्यक्तम् । ब्रह्मादिभिश्च सह जातत्वेन तद्धारणमत्र उक्तत्वादतः सदा धारणम् । 'सदा बद्धशिखेन चे'तिकारिकावन्मालापि सदा धार्या । मलधातोर्धारणार्थकत्वात् । मल्यते सदा ध्रियते सा माला ।

अनुपमसुवर्णरत्नैरद्धुतमाला वसुमितैर्विहिता ।
मध्यश्रीमाणिक्यया विराजतां मामके मनसि ॥ १ ॥
इत्थं नवाक्षरीयं परोक्षनित्यास्तिना प्रोक्ता ।
प्रत्येकं व्यक्तीनां स्वरूपमस्या विराजतां हृदये ॥ २ ॥ ९ ॥

तत्र प्रथमं जगन्मङ्गलमङ्गलमूर्तिर्भगवदुरसि स्थितेन श्रीवर्णेन सकलरत्नसुवर्णरससम्भृता नित्यानन्ता द्वितीया प्रकृतिः संसिद्धार्थिका विराजते । द्विसुवर्णाकृतिवर्णो यत्र । अत एवादिर्विस्तरेण विस्ताराय श्रेष्ठमानुकीर्तिवेधपरम्परया प्रकाशकौ यत्र द्वौ सदौ विराजमानौ सिद्धसाध्यौ यथा रामित्युक्त श्रुत्यानुनासिकौ तौ तु व्यवहार्याव्यवहार्यौ । तत्र पूर्वो गतगर्भप्रकृतिश्चतुर्थः ।

इति श्रीमुरलीधरभट्टविरचिता नवरत्नटीका संपूर्णा ।

---

१. स्थेयमिति पाठ ।

# परिशिष्टम् ।

[illegible] ।

अथ नवरत्नग्रन्थविषये किञ्चिल्लिख्यते । 'प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्' 'भक्त्याहमेकया ग्राह्यः' 'वशे कुर्वन्ति मां भक्त्या' 'भक्त्यैव तुष्टिमभ्येती'-त्यादिवचोभिः प्रेमलक्षणया भक्त्या भगवान् लभ्यः । 'दारान् सुतान् गृहान् प्राणा'नित्यारभ्य 'उद्धवात्मनिवेदिनां मयि सञ्जायते भक्ति'रित्यन्तेन वाक्येन प्रेमलक्षणाया निवेदनलभ्यत्वम् । निवेदनं च देहादिषु स्वकीयत्वाध्यासनिवृत्तिपूर्वकभगवदीयत्वबुद्धिसम्पादने भवति । 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्यु'रित्यादिवचनैर्निखिलवस्तूनां भगवदीयत्वात्तदीयत्वबुद्धिसम्पादनेन देहादीनां भगवत्सेवोपयोगिकरणस्य निवेदनपदार्थत्वात् । जाते च निवेदने पुनरिष्टानिष्टप्राप्तिनिवृत्त्युपायविमर्शनादिरूपचिन्ताकृतौ स्वकीयस्वाभिमानेन वाहिर्मुख्यसम्भवान्निवेदनवैयर्थ्यं स्यात् । तथा सति न निस्तार इति परमकृपालुभिराचार्यचरणैश्चिन्तारूपप्रतिबन्धनिवृत्त्यर्थं 'चिन्ता कापि न कार्ये'त्याद्युपदिदिशे । तथापि निवेदनस्य श्रवणाद्यष्टकानन्तरभावित्वात् श्रवणादीनां च प्रत्येकं दुराप्तया निवेदनस्य सुतरां तथात्वेन प्रेमलक्षणाया अनुत्पत्त्या कथं भगवदाप्तिरित्याशङ्क्य 'श्रीकृष्णः शरणं ममे'त्यष्टाक्षरमन्त्रो निरन्तरमावर्तनीयः, तेन च सर्वानुपपत्तिपरिहारः सकलसिद्धिश्चेत्युपदिष्टम् । तत्र कथमनुपपत्तिपरिहारपूर्वककार्यसिद्धिरित्याकाङ्क्षायां तदाशयं विवृण्वन्ति प्रभुचरणाः 'साधनफले एकीकृत्य सर्वसमाधानमाहु'रित्याभासग्रन्थेन । 'श्रीकृष्णः शरणं ममे'त्यष्टाक्षरमन्त्रे साधनफलयोरेकीकरणात्सर्वसमाधानमिति भावः । तथाहि । श्रीकृष्णः फलरूपः निःसाधनजनोद्धृतिकृताभिव्यक्तिः सर्वोद्धारप्रयत्नात्मा मम निःसाधनस्य शरणं आश्रयः शक्याशक्यसम्पादक इति मन्त्रार्थः । यद्यपि स्वायोग्यताविचारे श्रवणादिसाधनदौर्लभ्येन भगवत्प्राप्तिर्नैश्चिन्त्याभावः, तथापि मनोः पुष्टिस्वरूपविचारे शरणागतौ सर्वं सुलभम् । 'तेषामहं समुद्धर्ता मृत्युसंसारसागरा'दित्यादिवाक्यात् । तत्र साधनक्रमेण चेदुद्दिधीर्षुः, तदा जीवाशक्यानपि श्रवणादीन् सम्पाद्योद्धरति । अन्यथा विनापि साधनं फलार्पयति । अतः शरणगमनं पुमर्थसाधनम् । अत एव 'शरणं भावयेद्धरि'मिति श्रीमदाचार्यैरुक्तम् । 'गत्युद्रोहे भक्त्यभाव' इति च । इह भक्त्यभावे भक्तिसिद्ध्यर्थं हरिं शरणं भावयेदित्यर्थः । प्रकृतेपि श्रवणादिनवविधभक्तीनां दौर्लभ्यं ज्ञात्वा नवविधभक्तिसिद्ध्यर्थमेतन्मन्त्रावृत्तिरुपदिष्टा । अतः प्रमाणफलविचारेण पूर्वपक्षः । प्रमेयफलविचारेण समाहितिरिति ज्ञेयम् । तथाच फलमेव साधनीकृत्येति फलितार्थः । अनेन 'श्रीकृष्णः शरणं ममे'ति मन्त्रार्थो व्याख्यातो ज्ञेयः ।

किञ्च । अयं मन्त्रो नेतरसाधारणः । किन्तु पुष्टिमार्गीयः । समर्पणपरत्वात् । अत एव प्रभुचरणैरभिहितं 'यदुक्तं तातचरणैः श्रीकृष्णः शरणं मम । तत्र एवास्ति नैपिन्त्यमैहिके पारलौकिके' इति । पुष्टिमार्गीयत्वं च भगवत्स्वरूपातिरिक्तफलाभावपरत्वम् । तथाच पुष्टिस्थैरयं मन्त्रोऽनवरतमावर्तनीयः । अनन्या पूर्वोक्तस्वरूपानुसन्धानेन शरणभावनं

च कार्यम् । अत एवोक्तम्, 'एव चित्ते सदा भाव्यं वाचा च परिकीर्तये'दिति । एवं प्रपत्तौ भगवानशक्यमपि साधयिष्यतीति निष्कर्षः । अत एव तद्विवृतौ प्रभुचरणैरूचे 'सर्वात्मना शरणागतौ प्रभुरेव सम्पादयिष्यतीति हृदय'मिति । तथा सति चिन्तालेशोपि नास्तीति प्रतिबन्धाभावे सिद्धे निवेदनसिद्धौ मुख्यभक्तिलाभ', तेन च भगवत्प्राप्तिरिति चिन्ताकरणनिराकरणनिरूपणस्य सार्थक्यमिति कोविदा एव विदाङ्कुर्वन्तु ।

नवरत्नप्रकाशे, 'अन्यथा दारपरिग्रहोत्तरक्षण एव तन्निवेदने कृतेऽग्रे तदविनियोगे प्राप्ते तत्परिग्रहवैयर्थ्यापत्तिः ।' इय फक्किका पूर्वफक्किकया न सगच्छत इति बहूनामार्याणां महानेवोद्यमोऽस्मिन्ग्रन्थे नानाविधोऽस्ति । परन्तुक्रमशतेनापि न लगतीयं फक्किका । तत्रायं निष्कर्षो बोध्यः । इह लेखकादिदोषवशात्फक्किकानां वैपरीत्यं जातं लेखने । अतः फक्किकानामर्थस्वारस्यं विचार्य पूर्वापरभावं निर्धार्य फक्किका लिख्यन्ते । तथाहि । इह पूर्वं 'निवेदने भजनाधिकारस्तस्मिन् सति तदनिर्वाह इत्युभयतः पाशारज्जुरिति चेत्' इति फक्किकास्ति । तत्रोत्तरमुक्तम्, 'अत्र वदाम' इत्यादिना । तत्र 'गायत्र्युपदेशजसंस्कार एव'दित्यन्तेन निवेदनस्यावश्यकतोक्ता । एवं निवेदनस्यावश्यकत्वमुक्त्वा निर्वाहः केन कार्य इत्याकाङ्क्षायां 'निवेदितानामर्थानां भगवद्भोगार्थं विनियोगे जाते तदत्तप्रसादत्वेन स्वोपभोगकृतिरुचिततरा' इति फक्किकास्ति पठिता । तथाच देहादिनिर्वाहः केन कार्यं इत्याकाङ्क्षायां निवेदितेन निर्वाहः कार्यं इत्युत्तरं सिध्यति । तत्र किं प्रमाणमित्याकाङ्क्षायां 'दासधर्मत्वात्' इत्युक्तम् । तदग्रे भगवद्वाक्यं प्रमाणत्वेनोपन्यस्य निवेदितेन निर्वाहः कार्यं इति ज्ञापनार्थं'मुच्छिष्टभोजिनो दासा' इत्यादिवाक्यै 'रात्मशोधकत्वाचे'ति पठितम् । तदग्रे 'अन्यथा दारपरिग्रहोत्तरक्षण एव तन्निवेदने कृतेऽग्रे तदविनियोगे प्राप्ते तत्परिग्रहवैयर्थ्यापत्ति'रिति फक्किकया अन्यथानुपपत्तिः प्रदर्शिता । तदग्रे 'अपरञ्चे'त्यारभ्य 'अनिवेदितस्य निषिद्धत्वा'दित्यन्तेन निवेदनदानयोः पुनः स्वविनियोगतदभावाभ्यां वैलक्षण्यं प्रदर्श्य भगवदनिवेदितेन निर्वाह निषिध्य भगवन्निवेदितपदार्थेन भगवदुपभुक्तशिष्टेन प्रसादतया प्राप्तेन निर्वाहः कार्यं इति सिद्धान्तितम् । एवं फक्किकाक्रमे सर्वोऽपि ग्रन्थः सङ्गतो भवति । तथाच सिद्धमेतत् । 'द्विजस्य वैदिके कर्मणि गायत्र्युपदेशजसंस्कारव'दिति फक्किकाया अग्रे 'निवेदितानामर्थानां भगवद्भोगार्थं विनियोगे जाते तदत्तप्रसादत्वेन स्वोपभोगकृतिरुचिततरा । दासधर्मत्वात् । 'उच्छिष्टभोजिनो दासा' इत्यादिवाक्यैरात्मशोधकत्वाचे'त्यन्तो ग्रन्थो ज्ञेयः । एतदग्रे 'अन्यथा दारपरिग्रहोत्तरक्षण एव तन्निवेदने कृतेऽग्रे तदविनियोगे प्राप्ते तत्परिग्रहवैयर्थ्यापत्तिः । अपरञ्च । दाने हि न स्वविनियोगः । न तु निवेदने । अन्यथा निवेदितान्नादेर्भोजनं न स्यात् । अनिवेदितस्य निषिद्धत्वात्' इत्यन्तो ग्रन्थोऽस्ति । तदग्रे 'किन्तु प्रभौ निवेदितार्थविनियोगे जातेऽग्रे तदर्थं यत्नः कार्यो न वेति भवति चिन्ते'त्यादिरूपो ग्रन्थोऽस्तीति सर्वमनवद्यम् ।

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तर्गतः-सप्तमो

# अन्तःकरणप्रबोधः

पञ्चटीकाभिः समलंकृतः

१ श्रीगोकुलनाथानां विवृतिः

२ श्रीरघुनाथानां विवरणम्

३ श्रीहरिरायाणां विवृति

४ श्रीव्रजराजानां विवरणम्

५ श्रीपुरुषोत्तमानां विवरणम्

श्रीमद्-वल्लभाचार्य-महाप्रभु-प्रवर्तित-शुद्धाद्वैत-सम्प्रदायस्य-
सप्त-पीठान्तर्गत-षष्ठ-पीठाधिष्ठित-नित्यलीलास्थित-
गोस्वामिश्री १००८ श्रीवल्लभलाल-महाराजानां-
स्मृतौ-सेषा-श्रीमती-कृष्णावती-वहूजी-महा-
राजश्रीभ्यैताभि-प्रकाशित

वि. सं. २०३६ श्रीवल्लभाब्दाः ५०३

प्रकाशक :

गोस्वामी १००८ श्रीवल्लभलालजी महाराज (षष्ठपीठाधीश्वर) के
श्रीकृष्णावती बहूजी महाराज,
श्री कल्याणरायजीकी हवेली, बैंक रोड, बड़ौदा, गुजरात ३९०००६, भारत

साधारण संस्करण २००० प्रति
राज संस्करण १००० प्रति
श्रीवल्लभाब्द : ५०३

ग्रन्थ-परिचय लेखक : गोस्वामी श्याम मनोहर

मुद्रक :
स्टूडियो बहार, २३-ए, सेन्ट्रल चौपाटी बिल्डिंग चौपाटी,
बम्बई—४०० ००७.

॥ श्रीकृष्णाय नमः ॥
॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ-परिचय

अन्त.करणप्रबोध ग्रन्थ श्रीमहाप्रभुकी सन्यासग्रहण करनेसे पूर्वकी तथा षोडशग्रन्थोमे योजित ग्रन्थोमे अन्तिम कृति है.

श्रीयदुनाथजी-विरचित वल्लभदिग्विजयके अनुसार सन्यासग्रहण करनेके बाद श्रीमहाप्रभु भूतलपर ३९ दिन विराजे थे और यह सन्यास आपने इस ग्रन्थमे वर्णित तृतीय भगवदाज्ञाके पालनहेतु लिया था अतः आषाढ शुक्ल द्वितीयासे ३९ दिन पहले यानि वैशाख (व्रज जेष्ठ) कृष्णा सप्तमीके आसपास किसी दिन वि सं. १५८७ मे इस ग्रन्थकी रचना हुई यह माना जा सकता है

कुछ आधुनिक विद्वान् इस ग्रन्थमें वर्णित तीन भगवदाज्ञाओंकी व्याख्या श्रीमहाप्रभुको दोबार हुई अस्वस्थता तथा अन्तमे भ्रान्ति तथा देहत्यागकी आन्तरिक प्रेरणा के रूपमें देते है. जो बात इन विद्वानोके गले नही उतरती है वह है इन तीन भगवदाज्ञाओका चमत्कारिक रूप ! श्रीमहाप्रभुके प्रति किसी अतर्कित लगावके कारण ये मिथ्याभाषणके आरोपका साहस जुटा नही पाते अत: भक्ति और भ्रान्ति के सहारे इन स्पष्टतम विधानोकी अतीव अस्पष्ट और अटपटी व्याख्या प्रस्तुत करते है इन विद्वानोको कभी लगता है कि किन्ही भ्रान्तिके क्षणोमे ये तीन भगवदाज्ञाकी भ्रान्तिया पैदा होगयी होगी——कभी इन्हे लगता है कोई तीन सांघातिक बिमारियोसे पैदा हुई निराशाके वश श्रीमहाप्रभु इन बिमारियोको परलोक सिधारनेकी भगवदाज्ञा ही मान बैठे है—कभी इन्हें लगता है कि सम्भवत. किसी अन्तरवाणीके रूपमे श्रीमहाप्रभुने लोकत्यागका आदेश सुना हो और उसे ही श्रद्धावश भगवदाज्ञा मान ली हो !

न पूर्ण श्रद्धा और न पूर्ण अश्रद्धा अर्थात् मध्यमार्गको अपनानेकी मनोवृत्तिवश अपनी निराधार कल्पनाओको बौद्धिकताके रूपमे ये विद्वान् मान्य करना चाहते हैं जगतके कारण स्थिति या प्रयोजन को ईश्वरीय चमत्कार मान कर भी जो चमत्कृत नहीं होते, वे ईश्वराज्ञाके श्रवणको 'चमत्कारपूर्ण' घटना कहकर अस्वीकार करना चाहते हैं. इससे अधिक चमत्कारपूर्ण तार्किकता और क्या हो सकती है !

इन कपोलकल्पित व्याख्याओंको प्रस्तुत करनेका एकमात्र हेतु स्वयम्‌की तूटती हुई श्रद्धाको कथञ्चित जोडना होता है पर अपने इस मोहमें ये विद्वान् अक्सर यह वात भूल जाते हैं कि ऐसी अटपटी कल्पनासे श्रीमहाप्रभुका न तो कोई बुद्धिवैभव और न कोई चारित्रिक महत्ता ही सिद्ध होती है. जिस व्यक्तिका मनोवल दोवार केवल बीमार पड जानेपर तूट जाता हो उसे 'युगप्रवर्तक व्यक्ति' कैसे माना जा सकता है ? दोबारकी बिमारीसे पनपी निराशाको देहत्यागकी भगवदाज्ञा मान लेनेवाले भ्रान्त आतमघातीको किस अर्थमें बुद्धिमान् माना जा सकता है ?

भारतवर्षकी तत्कालीन नितान्त विषम परिस्थितिमें किस अदम्य उत्साह निष्ठा और सकल्प के साथ श्रीमहाप्रभुने वैष्णवधर्म और सस्कृति की मशालको अपने सुदृढ हस्तोंमें धारण किया था ! देशके कोने-कोनेको उससे प्रकाशित करनेको जूझते रहनेवाले व्यक्तिको इतनी कमजोर इच्छाशक्तिवाला माननेमें कौनसा गौरव सिद्ध होता है ? वर्ण-आश्रम जाति-लिंग निम्नवर्ग-उच्चवर्ग देशी-विदेशी के भेदके बिना सभी व्यक्तियोंके हृदयको पुष्टिभक्तिके उपदेशसे भावपूरित श्रीमहाप्रभुने कर दिया था. ऐसे व्यक्तित्वके धनी श्रीमहाप्रभु बीहड जगलोंमें वर्षा-शीत-आतप आदिकी परवाह किये बिना निरन्तर परिभ्रमण करते रहे--विदेशी आक्रामकोंसे आतकित नगर-जनपदोंमें बसनेवाली जनतामें निरन्तर आस्थाका सञ्चार करते रहे वे स्वयम् दो बारकी बीमारियोंसे घबराकर आत्मघात करें यह कल्पना कैसे बुद्धिसगत मानी जा सकती है ? जबकि वे जनताको- "त्रिदु खसहन धैर्यमामृते सर्वत सदा" का उपदेश देते रहे ! अत —

आज्ञापूर्व तु या जाता गगासागरसगमे ।
यापि पश्चान्मधुवने न कृत तद्-द्वय मया ।।
देहदेशपरित्यागस्तृतीयो लोकगोचर. ।
पश्चात्ताप कथ तत्र मवतोह् नचान्यथा ।।

इन शब्दोंमें रास्ती अन्तर्वाणी या सघर्षजन्य श्रान्ति या शारीरिक अस्वास्थ्यजन्य निराशा और भगवदाज्ञाकी भ्रान्ति को खोजना श्रीमहाप्रभुका अनादर है--उनकी अनुभूतिकी आध्यात्मिक-आधिदैविक गहनताके नितान्त अपरिचयका द्योतन है !

श्रीमहाप्रभुके पौत्र श्रीगोकुलनाथजी इस ग्रन्थका सन्दर्भ यो देते है

द्वादश स्कन्धात्मक श्रीभागवत पूर्णपुरुष पुरुषोत्तम श्रीकृष्ण भगवान्का ही नामात्मक स्वरूपमे प्रकट दूसरा रूप है भागवतकी वाणीके अर्थको प्रकट करनेके लिए ही वाणीके पति तथा भगवन्मुखरूप अग्निका श्रीमहाप्रभुके रूपमें प्राकट्य हुआ (यह रहस्य भागवतकी सुबोधिनी व्याख्याके प्रारम्भमे स्वयम् श्रीमहाप्रभुने ही प्रकट किया है) भागवतपर सुबोधिनी व्याख्या श्रीमहाप्रभुके अवतारका प्रमुखतम प्रयोजन है. दशमस्कन्ध भागवतका हृदय है प्रथमस्कन्धसे प्रारम्भ कर क्रमश दशमस्कन्ध तक पहुचनेमे पर्याप्त विलम्बकी सम्भावना थी फलत तृतीयस्कन्धतक पहुचनेके बाद अविलम्ब दशमस्कन्धकी व्याख्या पूर्ण करनेकी कही एक विशेष भगवदाज्ञा श्रीमहाप्रभुको हुई (उसका पालन तो सर्वथा हुआ ही अत यहा उस आज्ञाका उल्लघ नही किया गया है. परन्तु उस आज्ञाके निगूढ आशय तथा अपने अवतारके प्रयोजनकी पूर्तिका सन्तोषोद्गार स्वयम् श्रीमहाप्रभुके मुखसे दशमस्कन्धकी सुबोधिनीके समाप्तिपर प्रकट हो गया है—'प्रचरणमिह पूर्वतेऽनवद्य मयमपि विश्वजनाय मादृशाना, निजपदसमवाप्तये च नित्य निजगुरुणा हरिणैव लोकवन्द्यम्" )

दशमस्कन्धकी व्याख्या पूर्ण करनेके बाद श्रीमहाप्रभु पूर्वनिर्धारित योजनाके अनुसार अवशिष्ट स्कन्धोकी व्याख्या लिखने प्रवृत्त हुए

भागवतके सातो अर्थोमे एकवाक्यता स्थापितकर दिखलानेकी अपनी प्रतिज्ञाके अनुसार भागवतार्थ–निबन्धमे शास्त्रार्थ स्कन्धार्थ प्रकरणार्थ तथा अध्यायार्थ की व्याख्या लिखी जा चुकी थी इसी तरह वाक्यार्थ पदार्थ और अक्षरार्थकी व्याख्या भी प्रथम सूक्ष्मटीकामें लिखी जा चुकी थी पुन गूढतम रहस्योको प्रकट करनेके लिए द्वितीय टीका सुबोधिनीका प्रणयन हुआ यह एक सुदीर्घकालम पूरी होनेवाली लेखनशैलीमे लिखा जा रहा ग्रन्थ था भूतलपर उतने विलम्ब तक श्रीमहाप्रभुका बिराजना भगवान्को अभिप्रेत न था अतएव शीघ्र दशमस्कन्धपर सुबोधिनी-लेखनकी आज्ञा हुई और वह परिपूर्ण भी हुई अब पुन इसी शैलीमे अवशिष्ट स्कन्धोकी व्याख्या भगवदभिप्रेत नही थी श्रीपुरुषोत्तमजी अतएव पाचवे और छठे श्लोककी व्याख्यामे कहते है : "नच पूर्वाज्ञप्तासम्पूर्तिदोष यावदुक्तमेतावत्कृत्यैव साज्ञा कृतास्तु, अधिक

न कार्यम् . इदञ्च सूक्ष्मटीकातिरोधान—स्कन्धक्रमव्याख्यात्याजन दशमस्कन्धव्याख्यानानन्तरमसामयिकमाधवभट्टकाश्मीरिशरीरशराहतिप्रभृतिभि. कार्यैरनुमीयते"

गगासागर और मधुवन मे जब सुबोधिनी-लेखनको बन्द करनेकी आज्ञा हुई तो रासपञ्चाध्यायीवाली गोपिकाओकी तरह श्रीमहाप्रभुने भी इन आज्ञाओका उल्लघन करना चाहा वेणुनाद सुनकर जो गोपिकायें भगवान्के समीप पहुच पायी उन्हें पुन घर लौट जानेकी भगवान्ने आज्ञा दी थी, पर वे लौटी नही श्रीमहाप्रभुने भी इसी तरह लेखन-कार्य बन्द नही किया भगवदाज्ञाके उल्लघनके इन दोनो प्रकारोमे किन्तु एक विशेष अन्तर यह था कि गोपिकाओने भगवत्स्वरूप सुखके लिए भगवद्-वाणीका उल्लघन किया था, जबकि श्रीमहाप्रभुको भगवद्वाणीका उल्लघन नामसेवार्थ भगवद् विप्रयोगको सहते हुए करना पड रहा था फलत सूक्ष्मटीकाका तिरोधान हो गया. चतुर्थसे नवमतकको व्याख्या छोडकर दशमस्कन्धकी व्याख्या लिखनेका भगवदादेश भी हुआ ही था और पुन अवशिष्ट स्कन्धोकी व्याख्या लिखनेको प्रवृत्त होनेपर लिपिकार श्रीमाधव भट्ट काश्मीरी किसी पारधीके तीरस आहत हो गये ये सारी प्रतिकूलतायें कवल प्रतिकूल भगदिच्छाकी अनुमापिका थी तभी तृतीय भगवदाज्ञा हुई—लोकगोचर देह-देश-परित्यागकी. इस तृतीय भगवदाज्ञाने भगवदाग्रहकी स्पष्टता हुई श्रीमहाप्रभु अतएव अपने आग्रही मनको भगवदाग्रहके अधीन होनेको मना रहे है

"मेरे अन्त करण ! मेरी बात सावधानीसे सुनो कि कृष्णसे उत्कृष्ट एवम् निर्दुष्ट कोई तत्त्व न है और न हो सकता है भागवतकी सुबोधिनी व्याख्या पूर्ण करनेके लिए जिन दो भगवदाज्ञाओका उल्लघन किया था वह अपने आग्रहिल अन्त करणके कारण ही हुआ अन्त करणको भगवदाग्रहके अधीन होनेको समझाया जा सके तो अन्य सभी देहेन्द्रियादिकी वृत्ति और प्रवृत्तियो पर काबू पाया जा सकता है."

वैसे तो भागवतकी व्याख्याका प्रयोजन अन्तत श्रीकृष्णके स्वरूपम आसक्ति सम्पादित करना ही था पर यह समस्या श्रीमहाप्रभुकी नही किन्तु अन्य पुष्टिजीवोकी थी भागवतके वास्तविक अर्थको प्रकट करनेसे पुष्टिजीवोका उपकार होगा वे श्रीकृष्णकी पुष्टिलीलाके वास्तविक रहस्यको समझ

कर उसमे आसक्त हो पायेंगे जहातक श्रीमहाप्रभुका प्रश्न हैं तो उन्हें तो इस-प्रक्रियामे भागवनकी लौकिकी भाषा और परमतभाषा का भी चिन्तन-मनन-व्याख्यान करना ही पड़ता था केवल भगवल्लीलाके मनन या प्रवचन तक सीमित रहा नही जा सकता यो अनेक पुष्टिजीवोके उद्धारार्थ परोपकारकी मनोवृत्तिसे श्रीमहाप्रभु स्वयम् भगवद्-विप्रयोग सहने उद्यत हुए थे.

जितना व्याख्यान सम्पन्न हो चुका वह पुष्टिजीवोको पुष्टिमार्गपर प्रवृत्त करनेके लिए पर्याप्त है. इससे अधिक परोपकारकी आवश्यकता नही है सर्व-निर्णय-निबन्धमे श्रीमहाप्रभु स्वयम् यह निर्णय दे चुके है कि भगवत्सेवाके अवसरमे हिस्सा बटानेवाले धर्मोंका त्यागकर देना चाहिये परोपकारादि धर्म भी यदि भगवत्सेवामे बाधक होने हो तो छोड देने चाहिये "एतद्विरोधि यत्किञ्चित् तत्तु शीघ्र परित्यजेद् । धर्मादीना तथा चास्य तारतम्य विचार-यन् ॥ २३९ ॥ एतदविरोधोति सामान्यवचन धर्मादीनामुपलक्षण .परोप-कारादि सर्वधर्माणामपि क्षयिष्णवेव फलम्. अत उभयोरन्तर ज्ञात्वा परोप-कारादिधर्मा न कर्तव्या", यदि पूजाविरोधिनो भवन्ति" कोई धर्म या कर्तव्य भगवत्सेवामे सहायक होता हो तो अनुष्ठेय है अन्यथा भगवत्सेवामे बाधक होनेपर परोपकार आदि धर्म भी त्याज्य समझने चाहियें. फलत आत्मसमर्पण के बाद भगवत्सेवासे अधिक और कोई भी कर्तव्य पुष्टिजीवका हो ही नही सकता.

श्रीमहाप्रभु अतएव कहते हैं कि समर्पणसे पूर्व सभी पुष्टिजीवोकी स्थिति अस्पृश्य कुलमे उत्पन्न किसी सुन्दर स्त्रीकी तरह होती है पर आत्म-समर्पणके बाद इन्ही पुष्टिजीवोकी स्थिति, उक्त सुन्दरी यदि किसी राजाके मनको भा जाये और वह उसे अपनी रानी बना ले ऐसी, सम्मानपूर्ण हो जाती है इस असाधारण सम्मानकी प्राप्तिपर अभिमान भी कभी पैदा हो सकता है और उस अभिमानके कारण कभी अपमानित होनेका अवसर भी प्राप्त हो सकता है परन्तु अपनी पूर्वावस्थाकी अधमताका विचार करनेपर प्राप्त सम्मानित अवस्थाम थोडा-बहुत अपमान पश्चात्तापका विषय नही लगेगा क्योंकि राजाके द्वारा अपमानित भी रानी जगतमे तो सम्माननीय ही मानी जाती है

इसी तरह किसी प्रौढीभाववश भगवदाज्ञाके उल्लघन करनेके कारण

अपने देहके साथ भी ऐसा ही मोहजन्य व्यवहार देहके स्वामी श्रीकृष्ण को कैसे सुहायेगा ? कैसे सन्तुष्ट कर पायेगा ? अत यह विचार करना चाहिये कि आत्मसमर्पणरहित अन्य लौकिक जनोंकी तरह हमारी भी स्थिति होती तो क्या होता ?

शरीरका हठात् त्याग करना अशक्य कार्य लगता है परन्तु सर्वदु खहर्ता श्रीहरिके स्वरूपका विचार करना चाहिये कि साक्षात् नित्यलीलामें नित्य सयोग–सुखका दान, जब वे करना चाहते हैं तो दु ख कैसा ? अत किसी भी प्रकारके मोहकी आवश्यकता नही है कि प्रभु लौकिक स्वामीकी तरह रुष्ट हो जाये तो क्या करना—या फलदानमें प्रभु विलम्ब करेगे तो क्या होगा—या देह-देशके लोकगोचर त्याग करने पर पुष्टिजीवोका उद्धार कैसे होगा—या श्रीमद्भागवतकी व्याख्या सुबोधिनी सम्पूर्ण नही हो पायी इत्यादि-इत्यादि

अपने इस अन्त करणके प्रबोधनको ग्रन्थके रूपमे उपनिबद्ध कर श्रीमहाप्रभुने यह प्रकट कर दिया है कि निज अन्त करणके उपदेशके व्याजसे श्रीमहाप्रभु उन सारे पुष्टिजीवोके अन्त करणको सम्बोधित तथा प्रबोधित करना चाहते है, जिनमे भगवत्सेवासे अन्य किसी आध्यात्मिक या आधिदैविक फल प्रयोजन या कर्तव्य के प्रति अधिक आकर्षण पैदा हो सकता है अतएव "तव कथामृत तप्तजीवनम्" की सुबोधिनीमे श्रीमहाप्रभुने विवेचन किया है कि अमृतकी आवश्यकता मृत्युके उपस्थित होनेपर है. अन्यथा स्वत अमृतपानकी प्यास किसीको भी नही होती इसी तरह भगवान्‌के स्वरूप और भगवान्‌का कथामे भी घनीभूत रस और तरलीभूत रस का सा अन्तर होता है अन्यथा रासमे भगवान्‌के तिरोहित हो जानेपर उन्हे खोजनेके बजाय गोपीजनोने भी भागवत कथाका आयोजन किया होता ! "रसपिण्डयोरिव तव कथायाश्च विशाष अन्यथा कथार्थमेव यत्न कृत स्यात्" अतएव "सेवाया वा कथाया वा" मे 'सेवा और कथा' मुख्य कल्प है जबकि 'सेवा अथवा कथा' गौण कल्प है.

अत सभी पुष्टिजीवोको निश्चिन्त होकर यह निश्चित कर लेना चाहिये कि "भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत्" अर्थात् भागवत-कथा भी वस्तुत भगवत्सेवाका अग हो तो उत्तम कल्प है अन्यथा गौण कल्प या अनुकल्प ही

है. इस तरह श्रीमहाप्रभु सेवागभूत अन्त करणकी शुद्धिका प्रकार उसे भगवान्की सेवामे अनन्यरुचि होनेकी प्रेरणाके द्वारा इस ग्रन्थमे दे रहे है

प्रस्तुत सस्करण वि स. १९८१ मे प्रकाशित सस्करणका ऑफसेट प्रोसेस द्वारा पुनर्मुद्रित रूप है. श्रीमद्गोस्वामिकुलभूषण श्रीजीवनेशात्मज श्रीरण छोडलाल महाराजश्रीके प्रबन्धमे श्रीचीमनलाल हरिशकर शास्त्रीजीने उस सस्करणका सम्पादन किया था आर्थिक सेवा अनेक वैष्णवोने मिलकर की थी इन सभी महानुभावोका हम कृतज्ञताके साथ स्मरण करते है इति शम्

है. इस तरह श्रीमहाप्रभु सेवागभूत अन्त करणकी शुद्धिका प्रकार उसे भग-
वान्‌की सेवामे अनन्यरुचि होनेकी प्रेरणाके द्वारा इस ग्रन्थमे दे रहे हैं.

प्रस्तुत सस्करण वि स. १९८१ मे प्रकाशित सस्करणका ऑफमेट प्रोसेस द्वारा पुनर्मुद्रित रूप है. श्रीमद्‌गोस्वामिकुलभूषण श्रीजीवनेशात्मज श्रीरण छोडलाल महाराजश्रीके प्रबन्धमे श्रीचीमनलाल हरिशकर शास्त्रीजीने उस सस्करणका सम्पादन किया था आर्थिक सेवा अनेक वैष्णवोने मिलकर की थी इन सभी महानुभावोका हम कृतज्ञताके साथ स्मरण करते है इति शम्

श्रीकृष्णः

# श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥
चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमानेऽपि[१] मूलतः का क्षतिर्भवेत् ॥ २ ॥
समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥
सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥
सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ।
आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
याऽपि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥
पश्चात्तापः कथं तत्र सेवकोऽहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥
सर्वं समर्पितं भक्त्या कृतार्थोऽसि सुखी भव ।
प्रौढाऽपि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ।
लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ।
इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ॥ १० ॥
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यविरचितोऽन्तःकरणप्रबोधः सम्पूर्णः ।

---

१' अपमाने वा ' इतिपाठः श्रीव्रजराजश्रीपुरुषोत्तमचरणानां टीकायां ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।



## श्रीगोकुलनाथचरणैर्विरचिता विवृतिः ।

दर्शयन् स्वस्य सौभाग्यं स्वीयानां भक्तिवर्त्म च ।
स्वमनोबोधवाक्यानि प्रकटीकृतवान् प्रभुः ॥ १ ॥
प्रणम्य पितृपादाब्जं चिन्तिताधिकदायकम् ।
स्वमनोबोधकाचार्यवचो व्याख्यातुमुद्यतः ॥ २ ॥
यद्यपीश्वरवाक्यानि दुर्बोधानि सदा स्वतः ।
तत्कृपैव तदीयस्य तदर्थावगमे गुरुः ॥ ३ ॥
भविष्यतीति निश्चित्य प्रवृत्तोहं न चान्यथा ।
अतः स्वाचार्यचरणौ शरणं मम सर्वदा ॥ ४ ॥

अथ भगवान् पूर्णपुरुषः पुरुषोत्तमः स्वस्वरूपं श्रीभागवतं द्वादशस्कन्धात्मकं प्रकटीकृत्य तदर्थप्राकट्ये स्वातिरिक्तस्यायोग्यतां ज्ञात्वा स्ववागधिपतिरूपश्रीवल्लभाचार्यप्राकट्यं विधाय तदर्थप्राकट्ये आज्ञां च दत्वा तदर्थप्रकाशिकां सुबोधिनीं कारितवान् । तत्र क्रमेण स्कन्धत्रयकरणे कालविलम्बादाचार्यविप्रयोगासहिष्णुः सन् श्रीभागवततत्त्वार्थप्रतिपादकदशमस्कन्धविवरणार्थं विशेषाज्ञां दत्तवान् । तदाचार्यैः स्कन्धक्रमं विहाय दशमस्कन्धविवृतिरेव कृता । तत्समाप्तौ स्वस्याचार्यमिलनविलम्बं ज्ञात्वा तद्विलम्बासहिष्णुः शीघ्रं स्वनिकटागमनार्थमाज्ञां दत्तवान् । तदाचार्याः स्वसौभाग्यमौढिमवलम्ब्य स्वचिकीर्षितसम्पूर्णश्रीभागवतविवरणस्याजातत्वात् स्वस्य धर्ममार्गीयत्वात्तन्मार्गभावमौढ्या वारद्वयमाज्ञोल्लङ्घनं कृतवन्तस्तथापि भगवानाचार्यमिलनं स्वस्यात्यन्तावश्यकमिति श्रीभागवतविवरणार्थं दत्ताज्ञामप्यन्यथाकृत्वातिकृपारोपपूर्वकं पुनः स्वनिकटागमनार्थं तृतीयामाज्ञां दत्तवान् । तदाचार्या अत्यन्तं भगवदाग्रहं दृष्ट्वा पूर्वमाज्ञाद्वयोल्लङ्घनभावमौढिस्थानं स्वकीयमन्तःकरणमेवेति ज्ञापनाय तदेव बोधयन्ति । अन्तःकरण मद्वाक्यमिति ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

यद्यपि, अत्रार्थे सर्वेन्द्रियोपयोगात्सर्वेन्द्रियप्रबोध उचितस्तथापि तेषामन्तःकर-

णाधीनत्वाद्यथा राजनि निगृहीते सर्वमेव राज्यं निगृहीतं भवति। तथान्तःकरणे प्रबोधिते सर्वाण्येवेन्द्रियाणि प्रबोधितानि भवन्तीत्यन्तःकरणमेव प्रबोधयन्ति। मद्वाक्यं सावधानतया शृण्विति। यद्यपि मद्वाक्य शृण्वित्येतावतैव प्रबोधसिद्धेर्यत् सावधानतयेत्युक्त, तस्यायमाशयः। यथा स्वस्य धर्ममार्गाभिमानमौढ्या व्रजसीमन्तिनीभिः फलप्रकरणे भगवदाज्ञोल्लङ्घनेन स्ववीर्यसम्पत्तिः साधिता, तथाहमपि सम्पूर्णश्रीभागवतविहृतिं साधयिष्यामीत्याग्रहोऽस्मिन्नर्थे वैपरीत्यादनुचितः। वैपरीत्यं तु व्रजसीमन्तिनीभिः प्रियवाक्यानि फले प्रतिबन्धकानीतिभावमौढ्या निराकृतानि, भक्तेषु तु भगवदाज्ञा †फलसाधिकेति तन्नाग्रहो विपरीतफलकः, अभिलषितपर्यवसानादितिवाक्यश्रवणे सावधानतयेत्युक्तम्। कदाचिदतिमौढ्या विलम्बकरणे बाधकमाहुः। कृष्णात्परं नास्ति दैवमिति। कृष्णात्फलरूपात्परमतिरिक्तं दैवं परमेष्टरूपम्। दैवमितिपदाद्दिव्यातुक्ताः* सर्वेप्यर्था अत्र विवक्षिताः। तत्र धर्ममार्गक्रीडास्थानमिदमेव। (क्रीडाया) विजिगीषाप्यत्रैव। (भक्तेन सह) स्वमार्गीयव्यवहारोपि। (भक्ताय स्वमाहात्म्यद्योतनेन) द्युतिरप्यत एव, नो चेत्तद्व्यतिरेकेण शुष्कतैव। (भक्ताना) समयविशेषे स्तुतिरपि। (भक्ताय मोदुदान यथा कालीयदमनेन)। मोदोऽपि तथा। भावविशेषजनितमदोपि। परम निर्वृतिजनितः स्वप्नोपि। स्वप्नानन्तरं भावविशेषप्रचुरकटाक्षसूचितस्तेच्छापि। तदनन्तरं स्वाभिलषितस्थानगतिरपि, (भक्तसमीपगमनम्) इत्यादिकं सर्वमेव पूर्वभावमौढ्या बाध्यत इत्यनिष्टहेतुत्वात् मौढ्यस्त्याज्य इत्यत उक्तं कृष्णात्परं नास्ति दैवमिति। ननु श्रीभागवतविचारः पुरुषोत्तमपर्यवसाय्येवेति कदाचित्सौढिर्विहिता भवेदिति शङ्कानिराकरणार्थमुक्तम्। वस्तुतो दोषवर्जितमिति। अत्रायं भावः, यद्यपि श्रीभागवतविचारः पुरुषोत्तमपर्यवसायी तथापि विचारे क्रियमाणे स्वसिद्धान्तनिरूपणार्थं तद्विरुद्धशास्त्रान्तरीयसिद्धान्तनिराकरणमावश्यकमेव, भगवदाज्ञाहेतुकफलविचारे एतद्भावातिरिक्तभावप्रवेश एव फलपार्थे दोष इति वस्तुविचारे क्रियमाणे फलस्यैव निर्दुष्टत्व भावान्तरप्रवेशहेतुवस्तुनः सर्वात्मना न निर्दुष्टत्वमितिज्ञापनायोक्तं वस्तुतः स्वरूपतो न निर्दुष्टत्वम्॥ १॥

एवं प्रबोधनेपि पूर्वोक्तिकृताज्ञोल्लङ्घनजनितापराधेन यदि भगवानप्यानेन फलविलम्बं कुर्यात्तद्दोषभयभयादेकमपि कार्यं न सिध्येदिति श्रीभागवतार्थविहृतिसमाप्त्याग्रह एव समीचीन इति मनःकालिल लौकिकदृष्टान्तेन कैमुतिकन्यायेन निरस्यन्ति, चापदाली चेदिति।

---

† भगवत्प्राप्तिरूपत्वात्।

* दिव्यु क्रीडा-१ विजिगीषा-२ व्यवहार-३ द्युति-४ स्तुति-५ मोद-६ मद-७ स्वप्न-८ कान्ति-९ गतिषु १०।

१ तवेति पाठः।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमानेपि मूलतः का क्षतिर्भवेत् ॥ २ ॥

चाण्डाली चाण्डालजातीया राजपत्नी जाता राज्ञा पत्नीत्वेन परिगृहीता, इतरपत्न्यपेक्षयाधिकं मानिता कदाचित्प्रमादतस्तस्या अपराधाच्चेदपमानोऽपि कृतस्तदा मूलतः राजपत्नीत्वतः का क्षतिर्भवेत् राजपत्नीत्वं न गच्छतीत्यर्थः । यद्यप्यस्यां यज्ञसंयोगाभावात्पत्नीत्वं न सम्भवति तथापि *भोग्या जातेतिपदं विहाय पत्नीपदोपादानाद्यथा पत्नी त्यागयोग्या न भवति, तथैवास्यामप्यङ्गीकाराभिमानो ज्ञापितः । तेन स्वातिरिक्तान्यस्पर्शायोग्यत्वान्यविनियोगाभावादयो धर्मा ज्ञापिताः । यदि मूलपदेन चाण्डालीत्वमुच्यते तदा मानस्य चाण्डालीत्वमेव हेतुः स्यान्न तु राजपत्नीत्वम् । अत्र तु सम्मानने राजपत्नीत्वमेव हेतुत्वेनोच्यते न तु चाण्डालीत्वम्, अन्यथा पत्नी जातेतिपदं व्यर्थं स्यात् । तस्मात्त्वत्कृतापमानेऽपि मया न खेदः कार्यः, राजपत्नीत्वरूपमूलस्य विद्यमानत्वात् । यथा फाल्गुने मासि प्राचीनपत्रपतनेऽपि समूलस्य वृक्षस्य नूतनपल्लवाद्युद्गमेन पुनर्यथापूर्वत्वं तथा पत्नीत्वे सति पुनः पूर्ववदेव भविष्यतीति विचार्य खेदो न कार्यः । चेदिति पदादयोग्यतायामपि दैवगत्याङ्गीकारेऽपि यथैवं व्यवस्था लौकिके, तत्र सर्वथाङ्गीकारयोग्ये, अङ्गीकर्तुरलौकिकत्वे, अङ्गीकारस्य च नित्यत्वे, तथैवं फलविलम्बचिन्ता सर्वात्मना नोचितेति नाग्रहः कर्त्तव्यः । यदि विलम्बः सोऽपि रसस्य संयोगविप्रयोगात्मकत्वाद्विलम्बस्य विप्रयोगरसात्मकत्वात् फलमध्यपातित्वेनेति सर्वमवदातम् । एवमन्योक्तिरूपकारेण स्वमनःप्रबोधनेनानुषङ्गिकी स्वमार्गीयाणामपि शिक्षा ज्ञापिता ॥ २ ॥

यद्यपि फलविलम्बजनितः खेदो नास्ति तथापि भावबोधकाभिमानहानिजनितः पश्चात्तापो जात इति स्वमन्तःकरणं प्रबोधयितुमाहुः समर्पणादिति ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

मानहानिजनितः पश्चात्तापः स्वसमान एवोचितो न तु स्वीयत्वेन हितार्थं प्रभुकृतमानहानौ । भावजनितमानोऽभिनिवेशयोग्यतापि तत्र भगवदसाधारणसम्बन्धेनैव जाता न तु ततः पूर्वमपीति विचार्यैतज्ज्ञापनार्थमुक्तं पूर्वमुत्तमः किं सदा स्थित इति । सदा, असमर्पणदशायामपि उत्तमः पूर्वोक्तमानयोग्यः किमहं स्थितः ? । तस्मान्मम पूर्वोक्तभावजननयोग्यताऽभावरूपाऽधमता, का भाव्या, का कीदृशी भाव्या, विचारणीया । कीदृशीतिपदादधमताया निरवधित्वमुक्तम् । यस्मात्सर्वात्मना पश्चात्तापहेत्वभावस्तस्मात्त्वयास्मिन्नर्थे पश्चात्तापो न कर्त्तव्यः ॥ ३ ॥

---

* भोग्यास्य यथेच्छं त्यागो विधीयते । न तु पत्न्याः ।

यद्यपि पश्चात्तापहेत्वभावात् पश्चात्तापत्याग उचितस्तथापि फले बहुकालविलम्बश्चेत्तदा किं कर्तव्यमिति सन्दिहानमन्तःकरणं बोधयन्ति सत्यसङ्कल्प इति ।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥

सत्यः यथार्थः सङ्कल्पः मनोविचारो यस्य तादृशत्वाद्विष्णुः बाह्याभ्यन्तरभेदेन सर्वव्यापकः । अन्यथा फलदाने विलम्बं न करिष्यति । अस्मिन्नर्थेऽन्यथाभावशङ्कानिराकरणार्थं तुशब्दः । तस्मात्त्वया फलविलम्बसन्देहमपि त्यक्त्वा प्रभ्वाज्ञैव कार्या सततं, न तु भावमौढ्यात् कदाचिदप्यन्यथाभावः कार्यः । अकरणे बाधकमाहुः, स्वामिद्रोहोऽन्यथा भवेदिति । अन्यथा आज्ञाया अकरणे स्वामिद्रोहो भवेत् । आज्ञैव कार्या सततमित्येतावतैव आज्ञाकरणसिद्धावपि बाधकोक्तेरयमाशयः । यथा फलप्रकरणे व्रजसीमन्तिनीनां भावमौढ्या प्रभ्वाज्ञाया अकरणेऽपि कार्यं सिद्धं, तथा ममापि सेत्स्यतीत्यज्ञाननिवृत्त्यर्थमुक्तं स्वामिद्रोहोऽन्यथा भवेदिति । अस्यायमर्थः, व्रजसीमन्तिनीनां भावमौढ्या आज्ञोल्लङ्घनं प्रभोः स्वस्य च पुरुषार्थसाधकं जातम् । तद्दृष्टान्तेन त्वदुल्लङ्घने उभयोरपि विपरीतफलकत्वज्ञापनाय बाधकत्वमुक्तम् । बाधकत्वे हेतुः, तासां प्रभ्वाज्ञोल्लङ्घनं फलप्रतिबन्धकनिराकरणे उपयुक्तं जातं, तेन प्रभोस्तासां च निरवध्यानन्दः सिद्धः । तव त्वाज्ञोल्लङ्घनं प्रभुदित्सितफलप्रतिबन्धकत्वेन प्रभोः क्रोधजननेन, तेन क्रोधेन तव फलविलम्बेन च, प्रभ्वपराधस्तव चानिष्टं भवेदिति तत्सर्वात्मना नैव कार्यमित्येतदर्थमुक्तं, स्वामिद्रोहोऽन्यथा भवेदिति ॥ ४ ॥

एवं सोपपत्तिकमाज्ञाभावमुपपाद्य कदाचित्पूर्वकृताग्रहेण प्रभुकोपे कथं स्वामिलिप्सितसिद्धिरिति सन्दिहानमन्तःकरणं प्रबोधयन्ति सेवकस्य त्विति ।

सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ।
आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥

मया यत्पूर्वश्लोक उपपादितं, तत् सेवकस्यासाधारणस्वाभाविकधर्मत्वेन त्वय्यपि भविष्यति तदाऽसाधारणधर्मं दृष्ट्वा प्रभुरपि स्वस्वामित्वासाधारणधर्मं सेवकज्ञानागोचरमपि सेवके करिष्यति । ननु इदृशायामपि मयि सेवकत्वस्य विद्यमानत्वात् स्वामिन्यपि सहजस्वामित्वासाधारणधर्मस्य विद्यमानत्वात् कथं फलविलम्ब इति सन्देहनिवृत्त्यर्थं फलविल-

न्वहेतुं सेवकधर्मं निरूपयन्ति, आज्ञेति । आज्ञा प्रभ्वाज्ञा पूर्वं प्रथमतो गङ्गासागरसङ्गमे या जाता पश्चाद्द्वितीया या आज्ञा मधुवने मथुरायां जाता तदाज्ञाद्वयमपि मया न कृतम् । ननु तदाज्ञाद्वयं किं विषयकं यन्न कृतं तत्राहुः, देहदेशपरित्याग इति । पूर्वाज्ञाया विषयो देहपरित्यागः । द्वितीयाज्ञाया विषयो देशपरित्यागः । ननु बलात्कारेण देहपरित्यागस्य दोषरूपत्वात् कथं तदाज्ञासम्भवः । तदकरणे च कथं दोषसम्भव इति चेत्सत्यं, कर्माधीनदेहे प्रारब्धभोगसमाप्तिव्यतिरेकेण बलात्कारेण देहत्याग एव दोषसम्भवः । यत्र केवलं भगवदिच्छाधीनावेव देहग्रहणपरित्यागौ तद्देहस्यालौकिकत्वात्तदाज्ञया परित्यागो न दोषायेति ज्ञात्वापि यत्तदकरणं तस्याज्ञोल्लङ्घनहेतुत्वात् प्रतिबन्धकत्वमित्युक्तम् । देशपरित्यागः स्पष्टः । एवमाज्ञाद्वयाकरणेऽनिष्टहेतुत्वं ज्ञात्वा तृतीयाज्ञा कृतेत्याहुः, तृतीयो लोकगोचर इति । तृतीयः परित्यागः लोकप्रसिद्धस्मृत्यादिशास्त्रेषु गोचरो विषयः संन्यासग्रहणपूर्वकं गृहपरित्यागः स कृतः । यद्यप्यत्र कृत इति शब्दो नास्ति तथापि पूर्वाज्ञाद्वयकरणनिषेधादत्र च कृत इति शब्दाभावेपि करणमायाति । यद्यपि पूर्वोक्ताज्ञाद्वयाकरणापराधः सम्भवति, तथापि तृतीयाज्ञाकरणेन तयोरप्याज्ञयोः करणं जातमिति नापराधः ।

तथापि, आज्ञोल्लङ्घनजनितापराधेन यदि फलविलम्बं कुर्यात् प्रभुस्तदा तज्जनितः पश्चात्तापो भवत्येवेति कथमपराधनिवृत्तिरितिसन्देहे समाधानमाहुः, पश्चात्ताप इति

**पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।**
**लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥**

फलविलम्बेपि विलम्बस्य दण्डस्थानीयत्वात्सेवकेन पश्चात्तापो न कर्तव्यः । तत्र हेतुः, सेवकोहमिति । अहं सेवकः सेवाकरणयोग्यः । आज्ञाद्वयाकरणस्य सेवाप्रतिबन्धकत्वं ज्ञात्वा शीघ्रं सेवार्थं विलम्बजतापेन शिक्षामिव प्रतिबन्धनिवृत्तिं विधाय पुनः सेवार्थमेव विलम्बं न कृतवान् इति न मम पश्चात्तापः । यतोहं सेवकः, न चान्यथा । यदि प्रभुरपि सेवकत्वं न मन्येत तदापराधेनोपेक्षामेव कुर्यात्, न तु स्वीयत्वं ज्ञात्वा विलम्बजतापरूपशिक्षां कुर्यादित्यत उक्तं, न चान्यथेति, अस्मिन्नर्थेऽन्यथाभावो नास्तीत्यर्थः ।

ननु यथा लोके 'राजा मित्रं केन दृष्टं श्रुतं वे'ति लौकिकप्रभुन्यायेन तापानन्तरमप्युपेक्षामेव कुर्यादिति चेत्तत्र बाधकमाहुः, लौकिकप्रभुवदिति । लौकिकाः प्राकृता जीवाः प्रभवो लोके प्रभुत्वेन व्यवहार्याः, तद्वद्भगवान् द्रष्टव्यः न ज्ञातव्यः । तत्र हेतुः, यतः कृष्णः फलात्मा प्रभुश्च । लौकिकप्रभूणां प्राकृतत्वात्तेषामङ्गीकारस्यानित्यत्वादङ्गीकृतस्याप्युपेक्षा सम्भवति, प्रकृते प्रभोरलौकिकत्वेन तदङ्गीकारस्यापि नित्यत्वेन अङ्गीकृतोपेक्षैवासम्भाविनीति ज्ञापनायोक्तं, न द्रष्टव्यः कदाचनेति । अत एव पितृचरणैरुक्तं 'अङ्गीकृतजननजनितापराधदूरसमाविनोदोस्य । अङ्गीकृतिश्च नित्या यदन्तु

कोऽन्योऽस्य सामर्थ्यमिया'चेनाङ्गीकारस्य नित्यत्वे न सन्देहः । कदाचनेति भूतभविष्य-द्वर्तमानकालेष्वपीत्यर्थः ॥ ७ ॥

यद्यप्युपेक्षां न करिष्यति, तथापि, अपराधस्य जातत्वात्पुनः पूर्ववत्तादृशीं कृपां न करिष्यतीति मनःसन्देहनिवृत्त्यर्थमाहुः, सर्वं समर्पितमिति।

सर्वं समर्पितं भक्त्या कृतार्थोऽसि सुखी भव ।

त्वय्यपि पूर्वं कृपाऽसीदेव, यतस्त्वया सर्वमेव समर्पितं, तत्रापि भक्त्या भक्तिमार्गानु-सारेण, न तु विहितत्वाद्युपाधिना, तस्मात्त्वं फलरूपभक्तिमार्गाङ्गीकारेण कृतार्थ एवासि। मध्ये मौग्ध्यादहङ्कृतजनितापराधेन अन्तराये सति क्लेशं प्राप्तवानसि। अतस्तमाग्रहं परित्यज्य सम्याशां कृत्वा पुनः पूर्ववदेव सुखीभव यथापूर्वं सुखं प्राप्नुहि। ननु, अङ्गी-कारस्य नित्यत्वात्फलमार्गीयं सुखं यद्यपि दास्यति तथापि पूर्ववत्सर्वात्मना दास्यति न वेति सन्देहजनितक्लेशमग्रिमदृष्टान्तेन दूरीकुर्वन्ति। प्रौढापीति।

प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ।

फले प्रभुः तारतम्यं तदा कुर्याद्यदि त्वदपेक्षा न स्यात्, यस्यापेक्षावत्त्वं तस्य दोषमप्यनङ्गीकृत्य फलं ददात्येव। पूर्वोक्तं दृष्टान्तमेव विवृण्वन्ति। यथा प्रौढा रमणयोग्या स्वकीया दुहिता तस्यां स्नेहाधिक्यात् तस्या वरे भोक्तरि भोगार्थमुत्सवसमये यदि न प्रेष्यते तदा वरः स्वाभिलाषाया अपूर्त्याऽसन्तुष्टो भवति। प्रेष्यते चेत्सन्तुष्ट एव भवति। अपि शब्देन यद्यपि पाणिग्रहणमारभ्यैव तस्य भोगेच्छाऽस्त्येव, तथापि तस्यां स्त्रीपमर्दासहिष्णुत्वेन विलम्बमपि सहते। सहिष्णुत्वदशायां विलम्बकरणे असन्तुष्ट एव भवति। तथा प्रभोः सर्वात्मना स्वापेक्षासमये यदि अपेक्षां ज्ञात्वा कार्यसम्पत्तिर्न क्रियते तदा प्रभुरसन्तुष्ट एव भवति। तस्मादयं विलम्बः प्रभोः स्वाभिलषितसिद्ध्यभावहेतुरिति, विलम्बाभावे पूर्ववदेव सर्वात्मना स्वाभिलाषापूर्त्यर्थं फलं दास्यत्येवेत्यस्मिन्नर्थे विलम्बस्त्याज्य एवेत्यत्र उक्तम्। तथा देहे न कर्तव्यमिति। देहे देहत्यागविषये सर्वात्मना प्रभुसन्तोषाभावाद्विलम्बो न कार्यः। यथा दुहितृप्रेषणविलम्बे स्नेहो हेतुः। तन्निराकरणपूर्वकप्रेषणे वरसन्तोषेणोभयकार्यसिद्धिस्तथात्राप्याग्रहहेतुत्यागपूर्वकमाज्ञाकर-णेनोभयकार्यसिद्धिरिति सर्वात्मना प्रभुसन्तोषार्थं देहत्यागविलम्बहेतुर्देहस्नेहस्त्याज्य एव।

ननु यद्यप्यस्मिन्नर्थे हठोऽनुचितस्तथापि भगवदभिप्रेतश्रीभागवतार्थप्रकाशकत्वेन लोके परमोत्कर्षः सिद्ध्यतीति कदाचिदत्र किञ्चिद्विलम्बेच्छा सम्भवति। तथा अपि फल-विलम्बहेतुत्वेन तां निराकुर्वन्ति, लोकवदिति।

## लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥

यद्यपि भगवदभिप्रेतश्रीभागवतार्थभाक्त्वेन जैमिनिव्यासादिवत् श्रुत्यविरुद्धालौकिकशास्त्रार्थभाक्त्वेन लोक एवोत्कर्षः सिद्ध्येत् । नत्वलौकिकस्वसिद्धान्तफलानुभवहेतूत्कर्षः सिद्ध्यति । लोकोत्कर्षसिद्धौ जैमिनिव्यासाद्युत्कर्षवदलौकिक एवोत्कर्षः सेत्स्यति, न तु स्वमार्गीयोत्कर्षोऽपि । तस्मात्तदुत्कर्षासिद्धौ मे मम स्वमार्गीयफलभोक्तुः पूर्वोत्कर्षफलविचारस्य स्वमार्गीयफलविलम्बहेतुत्वात्किं फलं स्यान्न किमपीत्यर्थः । स्वमार्गीयफलविचारे पत्र मुक्त्यादीनामपि निःफलत्वं तत्र पूर्वोक्तलौकिकस्यापि फलत्वगणना सर्वात्मना दूरापास्तेति ज्ञापनायोक्तम्, किं स्यादिति । अत एतत्फलतारतम्यविचारेण स्वथापि सर्वात्मना फलसिद्धिविलम्बाभाव एव विचारणीयो न त्वन्योऽपि विचारः कर्तव्य इति ज्ञापनायोक्तम् । विचारयेति ॥ ९ ॥

यद्यपि फलविलम्बाभाव एव विचारणीयस्तथापि बलात्कारेण शरीरत्यागस्य स्वतोऽशक्यत्वात् कथं सम्भवतीति सन्देहनिवारणप्रकारमाहुः । अशक्य इति ।

## अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

यद्यपि बलात्कारेण शरीरत्यागः स्वकर्तृकश्चेत्स्यात्तदाऽशक्यः स्यात् । भक्तशरीरत्यागस्तु भगवदिच्छाकर्तृक इति न स्वस्याशक्यत्वम् । यतोऽशक्यादिसर्वदुःखहर्ता यो हरिः स एव सर्वपुरुषार्थसाधकत्वेन स्थित एवास्ति । अत्र हरिपदोक्त्या देहत्यागोऽपि फलान्तरायदुःखदूरीकरणार्थमेव । अतो लोके अशक्यस्याप्यनायासेन साधकत्वमुक्तं भवति । तस्मात्फलविलम्बाभावार्थमेतावत्कर्तरि मोहं मा गाः, मोहं चित्तविक्षेपं मा गाः, न प्राप्नुहि, कथञ्चन केनापि प्रकारेण आज्ञोल्लङ्घनजनितापराधफलविलम्बविषये आज्ञोल्लङ्घनात्पूर्वसामयिकफलानुभवे, आज्ञाकरणानन्तरं फलानुभवतारतम्यविषये च सर्वात्मना वैयर्थ्याभावबोधनायोक्तम्, कथञ्चनेति । अतः परमुक्तार्थमुपसंहरन्ति ॥ १० ॥

एवं प्रबोधनेन सर्वात्मना वैयर्थ्यनिवृत्तचिन्तेति ज्ञापनायाहुः । इतीति ।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

इति श्रीवल्लभाचार्यविरचितमन्तःकरणप्रबोधः समाप्तः ।

इतीति समाप्तौ । श्रीकृष्णदासस्य श्रीकृष्णपदेन भक्तसहितत्वीयत्वसाविष्कृतं ज्ञापितं, तद्दासत्वेन शुद्धपुष्टिमार्गीयफलरूपदास्यं प्राप्तस्य ममापि वल्लभस्य प्रभोः शुद्ध-

पुष्टिमार्गीयफलरूपदास्यप्राप्तानां च वल्लभस्यात्यन्तं प्रियस्य तादृशस्य स्वचित्तं प्रति हितं वचः, हितं हितकारि । वचसि हितमिति पदोपादानेन वचनस्य आप्तवाक्यत्वेन प्रामाण्यावधारणेन चित्तस्य सर्वात्मना वैयग्र्याभावः सिद्ध इति ज्ञापनायोक्तम् । चित्तं प्रतीति । एवं प्रबोधनेन स्वचित्तस्य शुद्धपुष्टिमार्गीयपरमफलानुभवयोग्यतां निःसन्दिग्धामुपपाद्य एतच्छ्रवणेन स्वमार्गीयाणामपि स्वाधिकारानुसारेणापि भक्तिमार्गीयफलं सिद्ध्यतीति ज्ञापनायाहुः, यदाकर्ण्येति । यद्वच आकर्ण्य आसमन्ताच्छ्रुत्वा । यद्यपि वचः श्रुत्वेत्येतावतैव श्रवणसिद्धावपि आसमन्तात्कथनेन साभिप्रायश्रवणं ज्ञापितम् । साभिप्रायश्रवणस्य फलमाहुः, भक्त इत्यादि । भक्तो भगवति स्निग्धो भवति । तदनन्तरमाचार्याणां फलविलम्बहेतुदूरीकरणसामर्थ्यं ज्ञात्वा स्वस्यापि फलविलम्बहेतुचिन्तां दूरीकरिष्यन्तीति चिन्तापरित्यागेन निश्चिन्ततां व्रजेत् प्राप्नोतीत्यर्थः ।

चित्तप्रबोधकाचार्यवचांसि विवृतानि वै ।
तेनाचार्याः प्रसीदन्तु स्वीये मयि सदा स्वतः ।
इति श्रीपितृपादाब्जपरागधनिना मया ।
श्रीवल्लभेन विरचिता विवृतिः पूर्णतामियात् ॥ २ ॥
अर्पिता श्रीमदाचार्यपदाब्जेषु मया स्वतः ।
तेनैव कृतकृत्योऽस्मि इति मे निश्चिता मतिः ॥ ३ ॥

इति श्रीवल्लभविरचितान्तःकरणप्रबोधटीका समाप्ता ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।

## श्रीरघुनाथचरणनिर्मितं विवरणम् ।

व्रजस्त्रीनेत्रनलिनवनालीषु परिभ्रमन् ।
लिप्सुस्तन्मधु योऽलित्वं माप स कृष्णपाश्रये ॥ १ ॥

अथ भगवदीयानामनवरतभगवद्भजनसिध्यर्थं तत्प्रत्यूहदुरितजनितचिन्तासन्तान-दवदहनदमनोपायमन्तःकरणप्रबोधमन्तःकरणं संमुखीकृत्य प्रतिजानते । अन्तःकरणमद्वाक्यं सावधानतया शृणुष्वेति ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

अत्र स्वान्तःकरणव्यपदेशेनान्येषामन्तःकरणं प्रबोध्यत इति ज्ञेयम् । कृष्णात्परं नास्ति दैवमित्यादिवक्ष्यमाणं मदीयं वाक्यं सावधानतया प्रमादराहित्येन शृणु आकर्णयेत्यर्थः । तदेवाहुः, कृष्णात्परमिति । वस्तुतः परमार्थतो विचार्यमाणे 'कृषिर्भूवाचक' इत्यादिनिरुक्तिबलात्कृष्णात्परमन्यद्दोषवर्जितं दैवं देवः सर्वोपास्य ईश्वरो नास्तीत्यर्थः । अत एव गीतायां 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति । एवं शृणुष्वेति वाक्यशेषः । ननु भगवदीयानामपि कदाचिल्लौकिकत्वकुबुद्धिरभिमतो दृश्यतेऽन्यथाभिमानेन स्वावमानमाशङ्क्य, अहं भगवति कृतात्मनिवेदीति सर्वं मयि भगवदेककर्तृकमिति विमृश्य मदपमानमपि भगवतैव कृतमिति भगवत्यपि दोषस्फूर्तौ सदृष्टान्तं समाधानमाहुः ।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमाने वा मूलतः का क्षतिर्भवेत् ॥ २ ॥

अत्र चाण्डालीतिपदं महादोषोपलक्षणपरं, तेन सदोषा या काचन राजपत्नीत्वेन परिगृहीता जाता राज्ञा च सत्कृता, कदाचित्तस्या अपमानेऽपि मूलतः स्वरूपतः क्षतिः हानिः का भवेन्न कापीत्यर्थः । अयं भावः । भगवत्सम्बन्धं विना सर्वेषामन्तःकरणं स्वभावतो दुष्टमेव । तदुत्कर्षस्तु भगवत्सम्बन्धकृत एव, तेन यत्सम्बन्धात्स्वयमुत्कृष्ट इत्य-

भिमन्यते, तत्कृतापमानेपि स्वरूपं तु स्वस्य पूर्वं सदोषमेवेति कुतस्तरां दोषाभावश्च इति । चकारादन्यैरपि राज्ञीत्वेन मानिता पूजिता । दृष्टान्ते एवं ज्ञेयं, सदोषापि अपि चाण्डाल्या राजपरिग्रहात् मानिताया अपि कदाचिद्राजकृततिरस्कारे स्वजातीयपतिकृतसंमानजनो यः राजकृततिरस्कार इति, यथा सम्बन्धगुत्कर्षास्त्योत्कर्षः । एवं भगवत्कृतापमानेपि स्वस्य लाभ एव न हानिरिति भावः ॥ २ ॥

स्वस्यान्तःकरणं स्वयमेव कथं बोधनीयमित्यपेक्षायामाहुः ।

**समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।**
**का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥**

योऽहमिदानीमुत्तमत्वाभिमानेनावमतोस्मीति मन्ये स एतादृशात्मसमर्पणात्पूर्वमपि किं सर्वकालमुत्तम एव स्थित आसम्, प्रत्युत तद्विपरीत एवासमतो मम पूर्वापेक्षयाऽधमता का भाव्या भविष्यति । यतः पूर्वावस्थामनुस्मृत्य पश्चात्तापो भवेदित्यर्थः ॥ ३ ॥

नन्वेवं प्रभुवः समाधानेपीदानीन्तनावमानफलदशायामन्येवं कुर्याद्वेत्तदानीं कथं समाहितिरित्यपेक्षायामाहुः ।

**सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।**
**आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥**

सत्यो यथार्थो यः सङ्कल्पो मतं तस्माद्विष्णुः सर्वत्र वर्तमानः फलदशायामप्यन्यथा न करिष्यत्येवेति ज्ञेयम् । तुशब्दो निर्द्धारणे च । स च सङ्कल्पो यथा । 'द्विःशरं नाभिसन्धत्ते द्विःस्थापयति नाश्रितान् । द्विर्ददाति न चार्थिभ्यो रामो द्विर्नैव भाषते' । 'सकृदेव प्रपन्नो यो तवास्मीति याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' । 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती'त्येवमादिषु ज्ञेयः । येन भगवताहं सर्वतः पृथक्कृत्य स्वभजने योजितः स कथमग्रे त्यक्ष्यतीति भावः । स्वस्यावश्यकर्तव्यमाहुः । आज्ञैवेति । सततं निरन्तरमाचार्यद्वारा या आज्ञा सैव कार्या न तु कदाचिदप्यनाज्ञप्तमन्यमतसिद्धं वा । अन्यथा एवमकरणे स्वामिद्रोह एव भवेत् ॥ ४ ॥

नन्वाज्ञातिरिक्तकार्यमात्राकरणे प्राप्ते चिकीर्षितकार्यस्य कथं सम्पत्तिरित्याहुः ।

**सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।**

सर्वस्वनिवेदिभक्तस्यायमेव धर्मो यद् स्वामी प्रभुरेव सर्वमैहिकामुष्मिकं स्वस्य स्वीयभक्तस्य करिष्यतीत्यर्थः । एवमनुसन्धानेन स्थेयमिति भावः ॥ ५ ॥

अत्र विश्वासार्थमाचार्याः स्वानुभवमुक्तावपन्त्याज्ञा पूर्वमित्यारभ्य श्लोकद्वयेन ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ।
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ॥ ६ ॥
देहदेशपरित्यागस्तृतीयो लोकगोचरः ।
पश्चात्तापः कथं तत्र सेवकोऽहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

आज्ञापूर्वेत्यिति । मां प्रति पूर्वं प्रथममाज्ञा देहपरित्यागविषयिणी गङ्गासागरसङ्गमे जाता । यापि पुनरन्या देहपरित्यागविषयिणी मधुवने मथुरायां जाता तदाज्ञाद्वयं मया न कृतमेव । तृतीया या लोकगोचरा लोकविषयिणी लोकानुद्धरस्वेत्येवंरूपा सा कृतेति शेषः ।

तत्राज्ञाद्वयभङ्गरूपेऽपराधे सति कथं मम पश्चात्तापो, यन्मया न कृतमित्येवं रूपः, स न कथमपि सङ्गच्छत इति । अकरणे हेतुः, सेवकोऽहमिति । सेवकस्य सर्वस्वनिवेदिनो या काचन कृतिः सा भगवदिच्छयैवेति निश्चयात् । न चान्यथा अन्यसम्बन्धो नास्तीत्यर्थः ।

ननु लौकिकप्रभूणामिवाज्ञाभङ्गस्यापराधत्वे भगवतोऽपि तथात्वापत्तिरित्यत आहुः । लौकिकप्रभुवदिति । कदाचिदासुरव्यामोहार्थं लोकवदाचरणेऽपि लोकवज्ज्ञातव्यस्तु कदाचिदपि नैव इत्यर्थः । लोकवदाचरणं तु रामायणमौसलादिषु प्रसिद्धम् ॥ ७ ॥

कस्मिन्नप्यंशे चिन्ता न कार्येत्याहुः ।

सर्वं समर्पितं भक्त्या कृतार्थोऽसि सुखीभव ।
प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्त्तव्यं वरस्तुष्यति नान्यथा ।
लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥

सर्वं लौकिकालौकिकसाधारणं स्वीयं भक्त्या स्नेहपूर्वकं समर्पितमेवास्ति, अतः कृतार्थोऽसि कृतकृत्योऽसि सुखी भव, सुखेनैवं वर्तस्व, न मिथ्या चिन्तयेत्यर्थः । आज्ञाद्यकरणादिना भगवदपराधास्पदं स्वशरीरमनुपयुञ्जानं प्रति सदृष्टान्तं दोषमाहुः । प्रौढापीति । प्रौढा वृद्धा, अपि शब्दात्प्रौढापि दुहिता यदा स्नेहवशाद्वरे वरसविधे न प्रेष्यते न याप्यते तदा तत्स्वामी वरस्तां विना प्रकारान्तरेण न तुष्टो भवतीति, यद्यपास्ति तथा निवेदिते देहेऽप्यतिस्नेहवशादनुपयोगो भगवदसन्तोषकारक इत्यर्थः । लोकवदिति ।

साधारणलोकवन्मे यदि स्थितिः स्यात्तदेदानींतनावस्थापेक्षया तदधिकं लोके वेदे च किं स्यान्न किमपि, प्रत्युत सर्वनाश एव भवेदित्येवं त्वमेव विचारय, इदमुपपन्नं न वेति ।

ननु सर्वथा शरीराद्यशक्तौ भजनासम्भवे कथं निस्तार इत्यत आहुः ॥

अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

सर्वप्रकारेण कृत्यऽसाध्येर्थे हरिरेवास्ति मम शरणमिति बुद्धिमवलम्बस्व । अस्मिन्नर्थे कथमपि मोहं वैचित्त्यं मा गाः, मा प्राप्नुहि ॥ १० ॥

उपसंहरन्ति ।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।

श्रीकृष्णे दास्यं गतस्य वल्लभस्य, श्रीकृष्णदासस्येति जात्यभिप्रायेणैकवचनं वा । श्रीकृष्णदासस्य चित्तं प्रति हितमभीष्टसम्पादकं वल्लभस्येदमभिहितं वचो ज्ञेयम् । कथं तदित्यत आहुः, यदाकर्ण्येति । यद्वचः श्रुत्वा भक्तो नैश्चिन्त्यं प्राप्नुयादिति ॥ ११ ॥

इति * श्रीविट्ठलेश्वरात्मजश्रीरघुनाथविरचितमन्तःकरणप्रबोधविवरणं संपूर्णम् ।

---

* केनचिद्विशेषकेन श्रीमत्प्रभुचरणानां विरचनमिति लिखितं, परमत्र श्रीरघुनाथनामाङ्कितत्वादुपलभ्येऽस्य श्रीमत्प्रभुचरणविरचितटीकाप्रकाशत्वात् इतिरियं श्रीरघुनाथस्यैवेति विभाव्यते ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।



## श्रीमन्महानुभावश्रीहरिरायचरणविरचितविवृतिसमेतः ।

अथ श्रीवल्लभाचार्याः कृष्णेनातिदयालुना । निःसाधनजनोद्धृत्यै पुष्टिप्रकटनेच्छुना ॥
स्वास्यरूपाः स्वरसेन प्रभुणा प्रकटीकृताः । जीवोद्धाराय विवृतिं चक्रुर्भागवते मुदा ॥
तथा स्वतन्त्रभजनप्रकारस्योपदेशनम् । ततश्च भगवान्मत्वा स्वमार्गोद्घाटनं हि तैः ॥
आचार्यविप्रयोगं चासहमानोऽखिलेश्वरः । आज्ञाद्वयमदाद्देहदेशत्यागैकबोधकम् ॥
ततः स्वधर्मदिवशतः करुणावशतोऽपि च । तद्द्वयोल्लङ्घनं चक्रुः पश्चात्तापस्ततोऽभवत् ॥
दोषस्फूर्त्या हरौ सङ्गविलम्बात्त्यागजाड्यतः । अङ्गीकृतिगतेश्चापि धर्मत्यागाच्च दुःसहः ॥
बाल्यवत्पूर्वमाज्ञप्तः पश्चाच्चेति यदब्रवीत् । यां तेनास्थिरवाक्त्वं हि हरौ दोषस्तदास्फुरत् ॥
ततः समादधुश्चित्तं वचनैः स्फूर्तिमागतैः ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात् परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

अन्तःकरणपदतो बहिरङ्गत्वबोधनम् ॥

दोषसम्बन्धतश्चित्ते*स्वभिन्नत्वं हि मन्यते । आज्ञोल्लङ्घनतो दोषो भगवद्दोषभावनात् ॥
अत एव तदात्मीयं कर्तुमत्र समाहृतिः । अन्यथा मौढ्यदार्ढ्ये तु सर्वभावच्युतिर्भवेत् ॥
मद्वाक्यमिति वाक्येषु स्वसम्बन्धो निरूपितः । निर्दोषभगवद्भावबोधकत्वात्तु सर्वथा ॥
अत एव समासो हि पदयोरत्र बोधितः । वाक्यमित्येकवचनं सर्वैरेकार्थबोधनात् ॥
स्ववाक्यस्य दुरूहत्वाद्भावमौढ्यस्य चेतसः । अर्थानवगमस्तस्मात्सावधानत्वबोधनम् ॥
श्रवणोक्त्या सतात्पर्यमर्थावगमनं मतम् । श्रवणेनैव हि स्वीयविचारान्तरवारणम् ॥
एतच्छ्रवणे दोषोऽपीति विघ्नवतारणम् । पश्चात्तापो द्विधा जातः प्रभुदोषसमागतेः ॥
आज्ञारूपस्वधर्मस्य परित्यागात्स्वदोषतः । तत्र तु प्रथमं दोषः प्रभौ नास्तीति कथ्यते ॥
तदारोपणतश्चित्ते भ्रान्तत्वमपि चोच्यते । न हि कृष्णे सदानन्दे दोषसम्भावनोद्भवः ॥
स्वच्छन्देन यतस्तत्र दोषाभावश्च रूप्यते । सर्वस्यैव तदात्मत्वान्न परं विद्यते ततः ॥

---

* 'स्वस्मिन् रूपम्' पाठः ।

अतो वैषम्यनैर्घृण्ये अपि दोषौ न कर्तरि । नास्तीत्युक्त्या तदन्यस्य सत्ताभावो विबोध्यते ॥
दैवशब्देन पूज्यत्वं सर्वेषां ज्ञापितं हरौ । तस्यैव च परत्वेन सर्वोत्कृष्टत्वबोधनम् ॥
जगत्पूज्ये भगवति दोषसत्ता कथं भवेत् । अन्येषामपि पूज्यत्वं तद्विभूतित्वतोपि हि ॥
भृगवे हरिणा स्वस्य दोषाभावो विबोधितः । निर्दोषपूर्णगुणता सर्वत्रैव निरूपिता ॥
सर्वेषां भाग्यरूपत्वं दैवशब्देन चोदितम् । यथा भाग्यं विना सर्वसाधनं विफलं मतम् ॥
तथा तत्प्रतिकूल्ये न देवानां फलदातृता । अत एवास्मदाचार्यैर्ग्रन्थे सेवाफलाभिधे ॥
तदन्यदेवसेवापि व्यर्थेति विनिरूपितम् । मायाश्रितानि चीर्णानीत्यादिवाक्यानि सन्ति हि ॥
स्वसम्बन्धेन सर्वेषां फलदे दोषवारके । स्वरूपतोपि निर्दोषे कथं दोषनिरूपणम् ॥
ननु भृग्ववतारे तु क्रोधादि दृश्यते हरौ । दैत्यमारणतोनन्तयुवतीनां परिग्रहात् ॥
क्रोधोपि देवस्येत्यादिवाक्यं च खलु दृश्यते । इति चेन्न हरौ दोषः प्रतीत्या न हि वस्तुतः ॥
विचार्यमाणे क्रोधादि हितं पर्यवसानतः । मुक्तिदानाभिमानन्ददानाद्यधिकारतः ॥
दोषा एव न भीर्वेद्यु मधुकारतं स्पृशन्त्यपि । अभिचारा वैष्णवद्तस्तद्दोषवर्जितम् ॥
एवं सतीदृशे नाथे दोषारोपणतः स्वतः । पूर्वं जातोपि चोत्कर्षो नश्येत्तदपमानतः ॥
स्वामिसम्बन्धराहित्याद्भवेत्तु महती क्षतिः । इति चेत्तत्समाधानमग्रिमश्लोकरूपितम् ॥

## चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
## कदाचिदपमानेपि मूलतः का क्षतिर्भवेत् ॥ २ ॥

संभावितस्य चाकीर्तिरिति गीतोक्तवाक्यतः । उत्कृष्टस्य पुरा पश्चादपकर्षे क्षतिर्भवेत् ॥
पूर्वं स्वरूपे दृष्टान्तरूपया हीनो निरूपितः । तादृशस्य तथोत्कर्षे मूलं तु भगवान्मतः ॥
पुष्टिमार्गेऽवतौ नैव जीवोत्कर्षो नियामकः । भक्तिहंसे तथा प्रोक्तं मत्प्रभिर्विट्ठलेश्वरैः ॥
पूर्वं जीवगतोत्कर्षोप्यप्रयोजक इत्यपि । मूलतस्त्वपमाने तु न हीनस्य क्षतिर्भवेत् ॥
अपमानभदुःखं तु क्रियते स्वविचारतः । दास्यं स्मर मनः स्वीयं दासानां नापमानभम् ॥
चेदित्यनेन दौर्लभ्यमङ्गीकारे निरूपितम् । जातं पद्राजपत्नीत्वं तच्च याति कथञ्चन ॥
अन्यैर्वा सा न दुर्वाक्यैर्वक्तुं शक्यया वचान्वितैः । न वा तदुपभोगोन्यैः पश्चात्कर्तुं हि शक्यते ॥
अपमाने विलम्बस्तु विरहानुभवार्थकः । बहिः संवेदने पश्चाद्दैन्यपारमसाधकः ॥
तदनन्तरमन्येपि मातृत्वमतयो ध्रुवम् । मानयन्ति यतस्तां हि नापकर्षस्ततो मतः ॥
कदाचिदित्यनेनात्र नित्यता नापमानने । मनःपूर्वकृतित्वेन नित्यताङ्गीकृतौ हरेः ॥
नापमाने यतस्तत्र हरेरिच्छा न तादृशी । शिक्षार्थं दण्डनार्थं वा कुरुते न निजेच्छया ॥
इच्छापूर्वकृतित्वे हि भवेदेव हि नित्यता । दण्डोप्यनुग्रहः मोक्षः सर्वत्रैवाव एव हि ॥
अपि शब्देन तस्यापि मानसाम्यं निरूपितम् । एवं वाक्यैर्बोधयित्वा दृष्टान्तेन च बोधनम् ॥
क्रियते दृढता यस्मात्कृतबोधस्य सिध्यति ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

अहं समर्पणात्पूर्वमुत्तमः किं स्थितो मनः॥

यतो दोषा निवृत्तास्तु सर्वेषां तत्समर्पणात् । सदेत्यनेन हृदये कदाचेशात्कचित्कचित् ॥
जाताप्युत्तमता नैव निरन्तरमभून्मयि । यथा श्रावणशुक्लैकादश्यां कृष्णे पुरःस्थिते ॥
साक्षात्समर्पणे सर्वोत्तमत्वं न तथा पुरा । नन्वात्मपरूपाचार्याणां कथनं नैव युज्यते
ईदृशं कृष्णरूपत्वात्सर्वेभ्योप्युत्तमता यतः । इति चेन्न रसात्मत्वाचार्यस्वरूपं च तथा ॥
यथा भगवतो लीलारसानुभवसिद्धये । मानिनीषु तथारूपं महं त्वाद्यवचोपि हि ॥
तथावतारे भक्ताख्यरसानुभवहेतुकम् । रूपं तथा वचश्चापि स्वाचार्यचरणोदितम् ॥
अतो रसात्मके रूपे न कार्यः संशयस्तथा । यतो रसस्वरूपं हि यत्र यादृक् तथैव तत् ॥
किञ्चाधुना चाधमता का वा भाव्या मम त्वया। यतोधमत्वविचि पश्चात्तापो भवेत्तव॥
ननु सत्यं तथाप्येव कृष्णः सर्वोत्तमः स्वतः । कर्तुं चापि तथाऽकर्तुमन्यथा कर्तुमीश्वरः ॥
अतः कदाचिद्वरणं कुर्याच्चेदन्यथा तदा । का गतिः कुत्र गच्छामि गत्वा वाच्यं कमाश्रये ॥
इयं चिन्ता न कर्तव्या—

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥

सत्यसङ्कल्पतो हरिः । स्वाङ्गीकृतिं कृपापूर्णो न कुर्यादन्यथा क्वचित् ॥
केषां सत्या कृतिः केषां वाङ् सत्या न विचारितम् । विचारितं हरेः सत्यमतस्तु कथनेन्यथा ॥
कदाचिदासदोषेण नान्यथा तद्विचारितम् । अतो वचःश्रुतौ नैवं चिन्त्यं भयमन्यथा ॥
विष्णुः सर्वत्र सत्त्वेन रक्षकः कथमन्यथा । करिष्यति यतो रक्षा साधारण्या कृतिः प्रभोः ॥
तुशब्देन न भक्तेषु क्वचिदप्यन्यथा कृतिः । करणं चाप्यकरणं तुल्यार्थोस्तु विरुद्धये ॥
नन्वेवं चेत्स्वतन्त्रत्वं किं दासानां न बाधकम् । स्वतन्त्रा गतचिन्तास्तु कुर्युराज्ञाविलोपनम् ॥
तथासति महान् दोषस्तदर्थमिह चोच्यते । आज्ञैव कार्या दासेन न प्रश्नो न विचारणम् ॥
एवकारेण धर्माणामाज्ञात्वेनैव वै कृतिः । कार्यत्वात्रवश्यकत्वार्थमत्ययान्तपदोक्तितः ॥
सेवकत्वात्मकुर्वन् वै प्रत्यवायी हि जायते । निरन्तरं तत्कृतिस्तु स्वधर्मत्वेन बोधिता ॥
स्वधर्मो यादृशस्तस्याकृतौ दोषोपि तादृशः । वाक्यपवेदधर्मस्याऽकरणे वाङ्निरूपितः
नरकादिः, स्वरूपात्मधर्मस्याकरणे हरेः । स्वामिद्रोहो महान् दोषः स्वरूपेण विरोधतः ॥
आज्ञाभङ्गो नरेन्द्राणामिति लौकिकवाक्यतः ।

सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।
आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥

सेवकस्य हरेः सेवां कुर्वतो मार्गवर्तिनः ॥
धर्मोयमेव नान्योस्ति यदाज्ञाकरणं प्रभोः । तुशब्देनान्यथा धर्मः पुष्टिस्थेषु विलोक्यते,
तदाज्ञालोपमात्रादि तद्धरेर्धर्मवेशनात् । तयैवात्रापि विज्ञेयं न, धर्मोयमितीरितम् ॥
अत एवार्जुनेनोक्तं करिष्ये वचनं तव । न चायमीदृशो धर्मः सन्दिग्धफलसाधकः ॥
यत आज्ञाभिधं धर्मं हरिः स्वीयं करिष्यति । 'अहं त्वा सर्वपापेभ्य' इत्युक्तं हरिणा यतः ॥
अन्ये सर्वेपि ये धर्मास्ते विभूतिपराः कृताः । फलदानं विभूतिभ्यस्तेषु सर्वत्र निश्चितम् ॥
ईदृग् धर्मपरित्यागे स्वस्मिन्नाहुर्मनः मति । पश्चात्तापोप्यतो योग्यः सर्वथेति निरूपितम् ॥
तदेवाहुर्निजाचार्या प्रथमाज्ञात्रयं हरिः * अदात्, यत्र स्थलं पूर्वाज्ञायां च तन्निरूपितम् ॥
यत्र देहपरित्यागः कर्तव्य इति सोऽब्रवीत् । तत्र बीजं तु सान्निध्याद्धरेर्भावात्मकस्य हि ॥
साक्षात्तद्भावसम्बन्धो विना मार्गोपदेशनम् । ततः स्वरूपमाकल्यं पुष्टिमार्गस्थितप्रभोः ॥
*ज्ञानं च नाभिलपितं गूढभावस्य वै हरेः । सर्वत्र सर्वजीवानां *तेनैवं प्रभुरुक्तवान् ॥
ततः प्राकृतवत्कृत्या गार्हस्थ्यादौ विमोहनम् । सम्पाद्य स्वीयसान्निध्यं भक्तानामेव कारितम् ॥
उपदेशनमारब्धमाचार्यैः पुष्टिमार्गगम् । ततो मधुवने सर्वा गूढलीला प्रकाशिता ॥
उपदेशेन भक्तेभ्योऽनभीष्टं तदपि प्रभोः । लीलापारत्वतः स्वस्य तद्वारैव प्रकाशनात् ॥
तद्द्वयं न कृतं कृष्णाऽऽज्ञया रसविशेषतः । श्रीभागवतगूढार्थप्रकटीकरणात्तथा ॥
लीलास्थलदृगासक्तेर्न भयं मोहितो रतेः । तुशब्देनाधुना नैव तादृगाज्ञां ददाति हि ॥
स्वास्थ्यवाक्ये न संन्यासे कुरुते भावघातनम् । 'स्वास्थ्यवाक्यं न कर्तव्यं' इत्यतोऽस्य प्रभोर्वचः ॥
स्थलं च प्रथमाज्ञायाः स्वसंयोगप्रबोधकम् । गङ्गायाः सागरेणात्र यथा योगस्तथा मया ॥
एकीभावेन सम्बन्ध इति स्वामिप्रलोभनम् । पद्ये द्वितीये यः प्रोक्तोऽपिशब्दस्तेन बोधितम् ॥
एतदाज्ञापनमपि स्वसम्बन्धप्रलोभकम् । पश्चाच्छब्देनैवदाज्ञा विलम्बेन समुद्गता ॥
स्थलं मधुवनं प्रोक्तं दुष्टसम्बन्धतस्तथा । तत्र नैवंविधं कार्यं कार्यमित्याशयो हरेः ॥
तत्रत्यानाञ्च विप्राणामतः मौनैव दुष्टता । एतद्द्वयं तु न कृतं तृतीयोऽर्थात्कृतो मतः ॥

---

* अदात्तत्र च पूर्वाज्ञायां तन्निरूपितम् । इति पाठ ।

* एतादृश प्रभुप्राकट्यात्मकं ज्ञानं सर्वत्र सर्वजीवानां स्यादिति गूढभावस्य हरेर्नाभिलषितम् ।

* एव देहत्यागरूपम् ।

त्यागो लौकिकविषयो नामदानादिवर्जनात् । सेवाप्रदर्शनाभावात् सहनादुःखदस्य च ॥
नन्वेवं धर्मगमने पश्चात्तापस्तु संभवेत् । इति चेन्न; यतः सेवाकरणात्सेवकोस्म्यहम् ॥

पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

सेवा तु स्वाम्यभिहितकरणेन भवेत्पुनः । स्वामिनैव यदुक्तं मे श्रीभागवतवर्णनम् ॥
पुष्टिमार्गप्रकटनं तदेव क्रियते मया । तदुत्तरं चेत्स्यास्यामि तदा दोषो भविष्यति ॥
न चाज्ञाप्राप्तसेवायाः करणे धर्मनच्युतिः । सेवाकृतेराज्ञयापि स्थितेरन्यविवर्जनात् ॥
तदा केन प्रकारेण पश्चात्तापो भवेन्मम । ननु प्रभूणां लोके तु दृष्टा सेवाकृतावपि
परित्यागकृतिः स्वीयोक्ताज्ञापरिपालने । अत्रापि चेत्तथा भावे पश्चात्तापस्तु सर्वथा
इति चेन्न हरिः कृष्णो द्रष्टव्यो लौकिकेशवत् । स भावाढ्यो हरिर्भाववेत्ता स क्षणिको हरिः
न तथा, स तु दोषाढ्यो हरिर्दोषविवर्जितः । सोऽनित्यस्वीकृतिः कृष्णो नित्याङ्गीकरणो मतः ॥
स दुःखरूपः कृष्णस्तु पूर्णानन्दो निरूपितः । सोल्पदः पूर्णपरमानन्दसन्दोहदो हरिः ॥
कदाचनेतिशब्देन सोऽस्थिरः स्थिरता हरेः । अतस्त्यागप्रापाऽभावादनुतापो निवारितः ॥

सर्वं समर्पितं भक्त्या कृतार्थोसि सुखी भव ।

किञ्च, सर्वं लौकिकं हि वैदिकं च समर्पितम् । अहन्ताममते चापि त्वया तस्य समर्पिते ॥
अतः कर्तव्यताऽभावात् कृतार्थस्त्वमभूस्तव । किमर्थं कुरुषे दुःखं किं तवास्ति सुखी भव ॥
भ्रमादेवाभवद्दुःखं स्वजाश्चितिश्रमाश्रयः । सेवावशादगमने नानुतापोऽलौकिकप्रभोः ॥

प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ।

सेवाप्रियस्य करुणाकरस्य मृदुचेतसः । देहाध्यासादगमने स्वसन्तोषो यथेत्प्रभोः ॥
अतो विवृतते चित्तसमाधानं निदर्शनात् । देहे न सत्ता स्थाप्या हि यथा दुहितरि स्वतः ॥
जामात्रर्थे पोषणं तु हर्यर्थे तद्वदत्र हि । वयोग्यतायां तच्चिन्ता कर्तव्या रक्षणादिषु ॥
प्रौढा चेत्सकला चिन्ता तदर्थेति विलुप्यताम् । अतो न देहाध्यासेन देहाद्यपेक्षणं हरौ
उचितं तद्वत्स्नेहात्स न तुष्येद्यतो वरः भक्ष्यभोक्ता, नाऽज्ञातरसस्यायोग्यवस्तुनः ॥
अतः स तु कथं तुष्येदपेक्षायामनर्पणात् । तदाशयपरिज्ञानमात्रश्चेदर्प्यते स्वतः ॥
तदा विशेषसन्तोषस्त्वाज्ञायां मध्यमः स्मृतः । आज्ञायामपि चेल्लोभो देहादेस्तोषणं कथम् ॥
यदर्थं सकलापेक्षा तदभावेऽखिलं वृथा ।

* 'महाप्रभु' पाठः ।

लौकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

ननु देहादिलोभस्तु लोकोत्पन्नस्य जायते ॥
स्वानभिप्रेतकथने मान्द्योपि भवति प्रिये । मन्दोपि प्रियसौभाग्यात्स्वासाधारण्यबोधकः ॥
जायते दोषभावश्च मत्तो मौढ्यित्वात्मनः । अतः किञ्चित्प्रियेति चेन्नैवं चित्तोचितं मयि ॥
अहं तद्दास्यरूपोस्मि भक्त्यात्मा वह्निरूपधृक् । निर्दुष्टः केवलानन्दकरपादादिसङ्गतः ॥
कृष्णाधरसुधासारः परमानन्दरूपवान् । भक्तिद्रावा समस्तानां स्वीयसान्निध्यमागतः ॥
श्रीकृष्णरसभावात्मा व्रजस्त्रीहृदयस्थितः । लीलाश्रितसमाक्रान्तसर्वाङ्गो विस्मृताखिलः ॥
हृदयस्वामिसहितो ह्याविर्भूतस्तदाज्ञया । एतादृशो ममापि स्याल्लोकवच्चेत्स्थितिर्मनः ॥
इहि किं स्यादिति पुनः स्वयं हृद्येव चिन्तय । तदास्यस्य स्थितौ चैवं प्रभोरपि तथा स्थितिः
इत्यज्ञानं न तद्युक्तं हरेरानन्दरूपिणः । अवाच्यत्वादेतदुक्तं स्वयमेव विचारय ॥
ननु जातेऽपराधे तु किं विधेयमशक्तितः । अज्ञात्वा वाथवा ज्ञात्वा यत्कृतं नाकृतं हि तत् ॥
अतः कथं सोऽनुतापो हृदयात्तु निवर्तते । इतिचेन्न हरिः सर्वदुःखहर्ता ह्युपेक्षते ॥
अशक्ये निजभक्तानां स्वयं सर्वत्र साधकः । यतो गजेन्द्रस्याशक्ये स्वयमाविर्बभूव ह ॥
कार्यं च कृतवान् सर्वमतो हरिपदं यतः । एतेन साधनाभावे दैन्यमात्रोऽत्र्यने पुनः ॥
निःसाधनफलात्मासौ प्रादुर्भवति निश्चितम् । एवकारेण चान्येषां निःसाधनफलात्मता ॥
न वा कृपालुता पूर्णानन्दाभावाद्व्यवस्थितेः । अस्तीति एवतः स्वामे प्रादुर्भावो निरूपितः ॥
अतो मोहं स्वविकल्पं मा प्राप्नुहि मनो मम । एवं स्वान्तःसमाधानं विधाय स्वसदुक्तिभिः ॥

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

---

इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः समाप्तः ।

सम्पाद्य स्वस्य नैश्चिन्त्यं स्वीयान् प्रति वदन्ति हि । एवं प्रकारकं वाक्यं हितं फलदमात्तु हि ॥
स्वचित्तं प्रति यत्प्रोक्तं तदाकर्ण्य भजन् हरिम् । स्वदोषेष्वपरित्यागी प्रभुरित्यवबोधतः ॥
परित्यागभयाभावाज्जनो निश्चिन्ततां व्रजेत् । नन्वेवं कथनादेव नैश्चिन्त्यं तु कथं भवेत् ॥
स्वानुभूतेरभावे तु वाङ्मात्रान्न हि सिध्यति । इति चेदुच्यते स्वीयस्तथाधातुं स्वदासता ॥
आविर्भूतस्वरूपस्य प्रोक्तानुभवबोधने । अनुभूयैतदखिलं मयात्र विनिरूपितम् ॥
नात्र कार्यो ह्यविश्वासो भवद्भिः सफलाकिभिः । ननु दासत्वकृष्णत्वे विरुद्धे भवतः कथम् ॥
किं वा विधाय काष्र्ण्यं तथात्वं स्वस्य कथ्यते । महापुरुषवत्तत्र कृष्णत्वं चौपचारिकम् ॥

अथवा भाववशतः स्वस्वरूपस्य विस्मृतिः । विरुद्धधर्मता वापि ब्रह्मवत्तत्र रूप्यते ॥
यद्वा व्यामोहसिध्यर्थमेवं रूपनिरूपणम् । एवं हि संशये कार्या सद्भिरेवं समाहितिः ॥
यथा रसात्मनो रूपं हरेर्यत्र यथाविधम् । वचः क्रियापि सर्वैवानुरूपा यत्र यादृशी ॥
तत्र तादृग्विधं रूपमुच्यते न प्रदर्शनम् । अन्यथा न रसात्मत्वं स्याद्रसोद्भूतं रसज्ञवत् ॥
लोकेऽपि यत्र नाट्यादौ प्रादुर्भवति वेद्रसः । तदावेशादिह तत्रैवमुच्यते सैव वर्तते ॥
एवं हि भगवान् कृष्णो रसात्मा यत्र यादृशः । तद्रसानुभवार्थं हि विशिष्टस्तत्र तादृशः ॥
रसात्मत्वाच्चदास्यं च फलत्वं तादृशं पुनः । अतो दास्यरसार्थापि प्रादुर्भूतं तदात्मना ॥
भक्त्यात्मकं सुखं तत्र रूपमेव हि तादृशम् । वचोऽपि तादृशं तत्र सत्यमेव न चान्यथा ॥
यथा वचो हरेः स्वीयदैन्यभावनिरूपकम् । मानापनोदसमयेऽप्यसम्भोगरसात्मनः ॥
तथाचार्येषु वाक्यानि नात्र कश्चन संशयः । वल्लभस्येति नामोक्त्या विश्वासस्थानमुच्यते ॥
हरेः स्वस्मिंस्तया नास्ति निरया मीतिर्निरूपिता । ईदृक्स्वरूपविश्वासे नैश्चिन्त्यं निश्चितं मया ॥
भाग्यभाजां हि विश्वासो भवेच्छ्रीवल्लभप्रभौ । यथा निवेदने चिन्ता नवरत्ने निवारिता ॥
एवमत्र फले चिन्ता स्वकीयानां समुद्धृता । संयोगयानविरहाभिधभावत्रयं स्वतः ॥
अनुभूतं तु संयोगः सेवया स्यात्ततोऽपरः । आज्ञाकरणतो मानभावोऽत्र सफलीकृतः ॥
स्वरूपस्फूर्तितः पश्चात्पश्चात्तापो निवारितः । इति श्रीवल्लभाचार्यपदाम्बुजरेणुषु—
सक्तचित्तस्य विवृतिर्हरिदासस्य पूर्णताम् । आगमनेन ते स्वीयं दृढं कुर्वन्तु मां सदा ॥
अवद्यमभवद्यं वा विचारयतु मे प्रभुः । यत्प्रसादादिदं सर्वं पूर्णतां याति सर्वथा ॥
सन्तोऽपि कृपया युक्तं मदीयं मूर्खजल्पितम् । श्रीमदाचार्यसम्बन्धात्पश्यन्तु परमादृताः १५१

---

इति श्रीहरिदासोक्तान्तःकरणप्रबोधविवृतिः

समाप्ता ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।

श्रीश्यामलालात्मजश्रीव्रजराजकृतविवरणम् ।

नत्वा स्वाचार्यपादाब्जं सर्वाभीष्टप्रदायकम् ।
तदुक्तबोधवाक्यानि व्याख्यास्ये बोधसिद्धये ॥ १ ॥

* ( अथ ) श्रीमदाचार्यचरणाः ( स्वीयान् प्रति नवरत्ने 'चिन्ता कापि न कार्या' इत्याज्ञाप्य तस्या अन्तःकरणधर्मत्वादन्तःकरणस्य च स्वभावचञ्चलत्वाद्भगवद्ध्यानादिसंभवे पूर्वोक्ताज्ञाभङ्गसम्भवाच्चिन्तेदं कृतमप्यकृतं स्यादिति तदभावाय ममैवचलेन यथा भगवान् भक्तान्तःकरणसम्बन्धी सन् फलप्रकरणे मद्ध्याननिवारणं कृतवाँस्तथात्र ) स्वीयान्तःकरणबोधार्थं ( तदभिमुखीकृत्य ) सर्वोद्दिष्टस्वरूपज्ञापनपूर्वकमन्तःकरणप्रबोधं निरूपयन्त्येकादशश्लोकैरेकादशेन्द्रियबोधकत्वेन । अन्तःकरणेति ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

हे अन्तःकरण ! मदीयानामिति शेषः ( समाप्तौ 'भक्तो निश्चिन्ततां भजेदि-त्युपसंहाराद्बोध्यः ) मद्वाक्यं सावधानतया सावधानीभूय शृणु शृणुष्वेत्यर्थः । स्ववाक्यत्वेनाप्ततोक्ता । श्रवणे सावधानत्वोक्तिः श्रवणानन्तरं तथाकरणार्थम् । अन्तः-करणस्यैकवचनं स्वमार्गे सर्वेषामेकरूपत्वज्ञापनाय मात्रभिप्रायेण । ( अत्र सर्वे भावाः स्वान्तःकरणमेव बोधनीयत्वेनाङ्गीचक्रुः । तदपि श्रीवल्लभाष्टके रूपद्वयेनावतारबोधनावस-रोत्तमे 'स्वास्यं प्रादुर्भूतं परतरे'त्युक्तेश्च, मुखाग्न्यवतारभिप्रायेण सङ्गतमेव, ) एवं स्वीयानामन्तःकरणं सम्मुखीकृत्य बोधवाक्यमेवाहुः । कृष्णात्परमिति । कृष्णात् 'कृषिर्भूवाचक' इत्यस्य भावानन्दात्मकतया विवरणेन प्रभावल्लभानां भावात्मकात् ( परमुत्कृष्टं दैवं देवानां क्रीडाकृतां समूहो वा, 'दैवं दिष्टं भागधेयं भाग्यमि'तिकोशा-चासां भाग्यरूपं वा । नास्ति इतरं ) भवतीत्यर्थः । ननु किं स्तुतिविशेषमित्याशङ्कायामाहुः, वस्तुत इति । तत्रोत्कृष्ट(ताया वास्तव)त्वार्थे विशेषणमाहुः-दोषवर्जितमिति । दोषै-र्वर्जितं रहितमित्यर्थः । ( तथा चेदं व्याख्यातत्वे बीजम् । किञ्च; ) कृष्णपदात् सदानन्द

* (   ) चिह्नान्तर्गतं श्रीमत्पुरुषोत्तमचरणैः संशोध्य सम्पूरितं ज्ञेयम् ।

कस्तेन यथा गोपिकार्थे कोटिकन्दर्पलावण्यं प्रकटीकृत्य प्रकटस्तथा सर्वत्रापि तदर्थे प्रकटो भविष्यतीति ज्ञापितम् । तेनान्यत्र क्रीडारूपत्वं नास्त्येवेति जीवानामन्यत्र नायकभावेन भजनं दोषरूपमेवेति भावो दोषवर्जितमित्यनेन ज्ञापितः । अत एव 'वीरयोषिता'मित्यत्र 'व्रजनितम्बिनी'वाक्यव्याख्याने श्रीमदाचार्यैर्'न हि कृष्णादन्य एवं सम्बोधनपदवी'ति निरूपितम् । आद्य श्रीमहिषीभिरपि 'त्वक्श्मश्रुरोमे'तिपद्येनान्यत्र कान्तभावस्य दोषरूपता निरूपिता । ( तथा च स्वक्रीडानुरोधेन स्वीयभाग्यरूपतया च स्वयमेवास्माकं करिष्यतीति निश्चित्य चिन्ता न कार्येत्यर्थः । )

(ननु सत्यमेवं तथापि भगवतो ब्रह्मस्तुत्यादिदुरापचरणरेणुत्वे स्वस्तुच्छत्वे च स्फुरिते सोऽत्यये तैवेति कथं तन्निवृत्तिरित्याकाङ्क्षायां तन्निवृत्त्यर्थमेवं) दोषरहितस्वरूपं विचार्य तत्र मानापेक्षादिदोषराहित्येनाप्येव कार्येति सार्द्धैस्त्रिभिर्वदन्तः प्रथमं (तुच्छत्वस्फूर्तेरकिञ्चित्करत्वाय निदर्शनमाहुः,)चाण्डाली चेदिति ।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमाने वा मूलतः का क्षतिर्भवेत् ॥ २ ॥

चाण्डाली चेत्कदाचिद्राज्ञा मानिता सती राजपत्नी च जाता । चकारेण स्वस्यापि तथाभिमानोत्पत्तिर्जातेति ज्ञाप्यते । ( तदा ) तादृश्याः कदाचिदपमाने वा मूलतो राजपत्नीत्वतः का क्षतिर्भवेत् ? न कापीत्यर्थः । माने कारणं राजपत्नीत्वं न तु चाण्डालीत्वम् । राजपत्नीत्वेपि कारणं राजसम्माननं न तु स्वधर्मः कोपि । तस्मात्तत्कृतापमानस्यापि ■ राजपत्नीत्वान्यथाकारित्वशङ्के । येथा राजपत्नीत्वसम्पत्त्यनन्तरमपमानेपि न तद्धानिस्तथात्र समर्पणानन्तरं ( परीक्षार्थं ) द्वितीयरसपूर्त्यर्थं वा भगवतापमानेपि कृते स्वस्य पुनरन्यभावो न भविष्यति । समर्पणेन यो भावो जातः स तु जात एव, ( पुनर्यदा परीक्षादिपूर्तिः ) संयोगरसदानेच्छा ( वा ) भविष्यति तदा पुनस्तथैव मानप्राप्तिरपि भविष्यतीति विचार्यम् । ( तथा द्वितीयव्याख्यानरीत्या राजपत्नीत्वमिव समर्पणानन्तरं स्वस्य सेवायोग्यत्वमेव विचार्यं, न तु चाण्डालीत्वमिव स्वतुच्छत्वमपि विचार्यम् । भगवता पुष्टिमार्गस्य स्वार्थे प्रकटितत्वेन स्वोरीचिकीर्षितजीवदोषानादरणपुरःसरं तदङ्गीकरणे अन्यस्य च जीवदोषाद्यासक्तौ भगवानेवेति न्यायेन विलम्बेपि पूर्वात्परबलीयस्त्वन्यायेन नाङ्गीकारतिरस्कारो, नापि दोषप्राबल्यमिति न तुच्छत्वाऽवसर इत्याशयेनाहुः । समर्पणादहमिति ।

१ ( किञ्च यथा राजसम्पत्त्यनन्तरं पूर्वस्वरूपं न विचार्यं, तद्विचारे सति स्वहीनत्वे स्फुरिते तस्य रसहानिः स्यात्तथा समर्पणे कृतेपि स्वस्वरूपविचारेण प्रभु कृपां करिष्यति न वेति तीरस्य न विचार्यम् । ) इति श्रीपुरुषोत्तमचरणैरनादृत्य पठ्य स्वहस्ताक्षरयोजितग्रन्थे सन्ति ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

समर्पणात् पूर्वं किमहं सदा उत्तमः स्थितः ? अपि तु न । तथा च समर्पणात् पूर्वं येन भगवद्क्षमालापेक्षा स्यात्तादृग्भावयुक्तस्तु न स्थितः । तदनन्तरमेव तथाजातस्ते-नापमानेऽपि ( मम ) काधमता भाव्या ( भाविनी, विभावनीया वा ) । यतः समर्पणा-नन्तरं पश्चात्तापो भवेत् ? । ..........कदाचित्कर इत्यनेनाभासमार्थं स्वसहजधर्मं आगन्तु-कधर्मेण स्मारितः । अतः परमर्द्धेन नित्याङ्गीकाररूपं भगवद्धर्मं तदर्थं स्मारयन्तस्तेन, मत्सुखपानकरणात्मकस्वरूपसम्पत्तिर्भविष्यति, पुनरन्यथा सा न भविष्यत्येव, भगवदङ्गी-कारस्य नित्यत्वादित्याहुः । सत्यसङ्कल्पत इति ।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥

सत्यसङ्कल्पत्वतो विष्णुर्व्यापकः, अन्यथा तु न करिष्यति । यथा 'ये यथा मां प्रपद्यन्ते,' 'द्विः स्थापयति नाश्रितान्नि'त्यादिः सङ्कल्पः सत्यो निश्चयाव्यभिचारी, तथा) 'मां प्रपन्नो जनः कश्चिन्न (भूयोऽर्हति शोचितु')मित्यादि(रपि)भगवतः सत्य एव सङ्कल्पस्तेन पुनस्त्वं (प्रपन्नमन्य)था न करिष्यति । ( शोकयुक्तं न करिष्य-तीत्यर्थः । किञ्च; ) विष्णुर्व्यापकस्तेन वियोगसमयेऽपि रसदानं करिष्यति, 'यथा परोक्षं भजते'त्यिन्यायेनेदि ज्ञाप्यते । एवं ( स्वस्वरूपधर्मं भगवद्धर्मञ्च स्मारयित्वा स्वीयसे-वकस्य रक्षणाय यतः ) प्रभुरन्यथा न करिष्यत्यतो भावात्मकं समर्पणमनुसन्धाय पापमा-नजं क्लेशं परित्यज्य, भगवान् यथैवेच्छापूर्वकमाज्ञापयति तथैव कार्यमित्याहुः । आज्ञै-वेति । सततं निरन्तरमाज्ञैव कार्या । अन्यथा तदकरणे स्वामिनः प्रभोर्द्रोहो भवेत् । भगवता स्वकार्यकरणार्थं ( स्वदासीय )देहकरणात्तदाज्ञाया अकरणे बाधकमेव स्यादिति भावः । ( 'भगवद्दत्तं देहं भगवत्कार्यार्थं जीवो धृत्वा तिष्ठती'ति गुरुजनोपाख्यानाज्ज्ञेयम् । )
सिद्धमाहुः । सेवकस्येति ।

सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ।

सेवकस्यायमेव धर्मो यदाज्ञाकरणम् । तु शब्देनान्यधर्मनिवृत्तिः सूच्यते ( एवं पादत्रयेण स्वाज्ञापरिपालनरूपो दासधर्मो भगवत्तोषहेतुरिति, तुना पक्षान्तरनिरासपूर्वकं स मुख्यतयोपपादितः । ) एवं सेवकधर्ममुक्त्वा प्रभुधर्मस्वरूपमाहुः । स्वामी प्रभुः स्वस्य इच्छातः करिष्यतीति स्वमनोभिलषितकरणं प्रभुधर्म एव । सेवकधर्मस्तु तदाज्ञाकरण-

मेवेति तुशब्देन ज्ञाप्यते । ( संयोगपृथक्त्वेनात्रापि तु शब्दस्यानुषङ्गः । यद्वा, स्वामी भगवान् स्वस्यात्मीयस्य दासस्य करिष्यति, स्वाज्ञापालनाग्रहं विलोक्य दयया तं धर्मं निर्वाहयिष्यतीत्यर्थः । अतस्तद्धर्मेऽपि न चिन्तावसर इति भावः । एवं सार्धैस्त्रिभिराज्ञैव कार्येति सम्यगुपदिश्य, ) एवं भगवदाज्ञाकरणसंतुष्टप्रभुसम्पादितेन स्वस्योत्तमत्वेन कदाचिदाज्ञायान्यथाकरणेऽपि स्वस्य तादृक्सेवकत्वमेव मन्तव्यं, न त्वन्यथा विचारणीयं, पश्चात्तापो वा कर्तव्यो, यतः प्रभुरेव स्वेच्छातस्तथाकारयतीत्याशयेन स्वदृष्टान्तमाहुः । आज्ञेति ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥

या आज्ञा पूर्वं गङ्गासागरसङ्गमे गङ्गासागरसमीपे जाता, पश्चाद्या मधुवनेऽपि जाता, तदाज्ञाद्वयं मया न कृतम् । तु शब्दस्त्वाज्ञाद्वयाकरणस्य भगवदिच्छाविषयरूपत्वज्ञापनार्थः । ननु, आज्ञाद्वयं किं विषयकमित्यपेक्षायामाहुः । देहदेशपरित्याग इति । गङ्गासागरसङ्गमेऽन्यत्र गमनकृतस्वनिकटस्थित्यभावप्रकोपेन देहपरित्यागविषयिणी । सापि पूर्वोक्तप्रकारेच्छाजनितक्षणवियोगासहिष्णुतया जाता । ( एवं मधुवने मथुरायां देशत्यागविषयिणी । ) स्वाचार्यैस्तु स्त्रीपशिक्षार्थैकविप्रयोगतापानुभवार्थं दूर एव स्थितिः क्रियते । भगवता स्वार्थे तथाज्ञासम् । श्रीमदाचार्यैः स्वसौभाग्यज्ञापनाय तदाज्ञाद्वयमपि न कृतम् । तृतीया लोकगोचरा लोकपरित्यागविषयिणी जाता, सा कृतेति भावः । ( ..............पादे, तृतीय आज्ञाविषयः, स चोभयसमुदायरूपः सन्यास इति व्याख्येयम् । तथा च द्वयं न कृतमप्येवं कृतं, तदपि मया सदवतारेण । अतो मन्निदर्शनं पुरस्कृत्य अन्येन तथा न कार्यम्, किन्तु यथा यथाज्ञा तथैव कार्यमितिभावः । यद्वा, न कृतमित्यत्र काकुः । 'दिह' उपचये, 'दिश' अतिसर्जने, देह उपचयः, देशो दानम् । अयमर्थः, भगवता श्रीभागवतार्थप्रकटनाय पूर्वमाज्ञप्तं, तत्सूक्ष्मटीकाकरणेन कृतम् । ततः सुबोधिन्यामुपचयो ग्रन्थबाहुल्यात्मा आरब्धस्तदा देहपरित्याग आज्ञप्तः । ततस्तद्विहाय निरोध एव विवृतः । ततो मुक्तौ विव्रीयमाणायां देशपरित्याग आज्ञप्तः । तदा विमोचने स्वाश्रयमार्गे च विवृते फलं दत्तमेव स्यादितितदभावाय तादृशमाज्ञाद्वयं मयापि स्वाग्रहत्यागेन कृतश्चेदन्येन तु सर्वथा कर्तव्यमेवेति भावः । )

( एवमाज्ञाया अकरणकरणे उक्त्वा ) स्वस्याज्ञाद्वयाकरणजपश्चात्तापाभावायमाहुः । पश्चात्ताप इति ।

पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

तत्राज्ञाद्याकरणे पश्चात्तापो मया कथं कर्तव्यः ? । यतोहं सेवकोस्मि । तदपि स्वस्य सेवकत्वमौच्यैव कृतम् । न चान्यथा, न केवलं स्वपौरुषेणेति । तथा च ममेदं (शोभते नत्वन्यस्येतिभावः । यद्वा, आज्ञाद्याकरणान्ममापि पश्चातापश्चेदन्यस्य त्वत्यन्त [illegible] स्यादतस्तथान्येन न कार्यमितिभावः)। ननु सेवकत्वे सति स्वप्रोक्ताया आज्ञाया अकरणे भगवानप्रसन्नो भवेदि(ति कथं भवतां शोभाकरं, यदि शोभाकरं कथमन्येन न कार्यमि)त्याशङ्कय भगवतोऽलौकिकत्वेन तद्भावमाहुः । लौकिकप्रभुवदिति । लौकिकप्रभुवत् कृष्णः सदानन्दः फलरूपः कथञ्चन केनापि प्रकारेण न द्रष्टव्यः । तथा च, यथा लौकिकप्रभूणां स्वोक्ताकरणे क्रोधो भवति भगवतस्तथा न भवति । यतस्तद्रसानुभवार्थं प्रभुरेव तथा प्रेरयति । अत एव भगवता पार्थं प्रत्युक्तं 'कर्तुं नेच्छसी'-त्यारभ्य 'मायये'त्यन्तम् । लौकिकानामतथाभावात् क्रोधो भवति । (अतो भगवदप्रसन्नतापा अभावादस्माकं शोभाकरम् । अन्यस्य तु तादृग्योग्यतापा अभावेन भगवदिच्छाज्ञानाभावादनुचितमेवेत्यर्थः) ।

(एवमाज्ञाकरणतदकरणप्रयत्स्याप्युक्त्वा तेन यत् सिद्धं तद्वदिष्यन्तो,) भगवति सर्वसमर्पणं जीवधर्मः, पश्चात्तु प्रभुः स्वेच्छया यत्करिष्यति तत्करोतु, स्वस्यापि तथैव स्वधर्मः कृतोस्तीति नैश्चिन्त्येन स्थीयतामित्याहुः । सर्वमिति ।

सर्वं समर्पितं भक्त्या कृतार्थोसि सुखी भव ।
प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्त्तव्यं वरस्तुष्यति नान्यथा ।

भक्त्या स्नेहेन सर्वं समर्पितमतः कृतार्थोसि सुखी भव सुखेनैव स्थीयताम् । परिणामे सुखमेवेति सुखी भवेत्युक्तम् । सर्वपदेन लौकिकं रसाधिकरणदेहसम्बन्धिभावरूपमलौकिकमेवेति ज्ञापितम् । समर्पणे कृते देहेपि सम्बन्धस्य भावतारेणैव सेवा कर्त्तव्येति लौकिकरसात्मकनिदर्शनपूर्वक(तत्कर्तव्यतावश्यकत्वमाहुः) । प्रौढापीति । प्रौढापि रसयोग्यापि दुहिता स्वस्य स्नेहाभावस्य वरे यद्वत् प्रेष्यते तथा देहे न कर्त्तव्यम् । स्वस्य देहस्नेहेन भगवत्सेवायां देहस्याविनियोगो न कर्त्तव्यः । किन्तु देहेन लौकिकेन भावात्मकेन च भगवद्रसयोग्यत्वेनैव कर्तव्या । तदकरणे वरः प्रभुरन्यथा न तुष्यति । यथा स वरः स्वस्त्रीं विना न तुष्यति तथा प्रभुरपि न तुष्यति । अत्रापि

समर्पणाऽनन्तरं मुख्यो भावः स एवोच्यते । एतज्ज्ञापनार्थमेव पूर्वं निदर्शने राजपत्नीत्वमुक्तम् । द्वितीयेनापि तथैवोक्तम् ।

( एवं देहस्नेहत्यागपूर्वकं देहेन सेवैव कारणीयेति निर्दार्य पूर्वं भगवता परीक्षार्थं कृते विलम्बे कथं गतिर्भवित्रीति या चिन्ता कृता, सा ते गुणायैव जाता, न तु दोषाय । न ह्येवानङ्गीकृतौ चिन्ता भवति, किन्त्वङ्गीकृतावेवेत्याश्वासनाय दृष्टान्तमुखेन परिचायकान्तरं वदन्त ) एतत्सेवाद्यभावे सर्वं व्यर्थमेवेत्याहुः । लोकवदिति ।

**लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥**

**अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥**

चेत्, समर्पणाभावे मे स्थितिर्लौकवत् सर्वसाधारण्येन स्यात्तदा किं स्यात्, फलमिति शेषः । इति विचारय । किं स्यात् ? न किमपीत्यर्थः । ( तथा च, तथा स्थित्यभाव एव गुणपरिचायक इति भावः ) । नन्वेतद्दासस्य सर्वफलरूपत्वमस्तीति सत्यम्, तस्य परं मादृशयाशक्यत्वात्तत्प्राप्तिः कथं स्यादि(तिचिन्ता तु भवतीतिचेद्विमेषि तदा तादृशभीते भगवानपि दयालुरेवे)त्याहुः । अशक्य इति । अशक्ये सति हरिरेकारणसर्वदुःखहर्ताऽस्त्येव, शरणमिति शेषः । अतस्तदभावे सर्वं व्यर्थमिति लौकिकेन विचारेण कथञ्चन तत्प्राप्त्यर्थं मोहं मा गाः, मा प्राप्नुहि ।

एवं प्रबोधं निरूप्या(तः परं श्रद्धापिशाच्यनुदयादु)पसंहरन्ति । इतीति ।

**इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।**

**चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥**

**इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।**

इतीति समाप्तौ प्रकारे वा । श्रीकृष्णे दास्यं गतस्य वल्लभस्य रसरूपत्वेन प्रियस्य चित्तं ( स्मृतिजनकमन्तःकरणं ) प्रति हितं हितकरं यद्वचोऽस्तीत्यर्थः । यद्वचः आकर्ण्य, आसमन्तात्तात्पर्यपूर्वकं श्रुत्वा भक्तो भूत्वा, निश्चिन्ततां निश्चिन्तस्य भावमलौकिकत्वं व्रजेत् ।

चित्तप्रबोधवाक्यानि स्वाचार्योक्तानि सर्वदा ।
तिष्ठन्तु हृदये येन प्रसीदति हरिः स्वयम् ॥ १ ॥

इति श्रीमत्प्रभुचरणरेणुधन(श्रीश्यामलात्मजश्रीव्रजराज)-
कृतम् अन्तःकरणप्रबोधविवरणम्
सम्पूर्णम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।



श्रीदशदिगन्तजैत्रश्रीपुरुषोत्तमचरणकृतं विवरणम् ।

सन्तु स्वभावदोषोत्थचिन्ताकुलान् स्वकान् ।
अन्तः श्रीमदाचार्याः सन्तु मत्स्वान्तगोचराः ॥ १ ॥

अथ श्रीमदाचार्यचरणा उपदिष्टसेवाया निर्दोषत्वाय सिद्धान्तरहस्ये ब्रह्मसम्बन्धेन सेवाकर्तॄणां २ पूर्वेषां देहजीवयोः दोषाणामकिञ्चित्करत्वमग्रे दोषासंसर्गोपायं च भगवदुक्तं निरूप्य, सेवाया आधिदैविकीत्वाय नवरत्ने चिन्तानिवृत्त्युपायकथनमुखेनोद्वेगाख्यप्रतिबन्धकनिवृत्तिप्रकारञ्च निरूप्य तथा सेवाकरणे भगवत्साक्षात्स्वरूपानुभावप्रदर्शनस्य चावश्यंभावात्तस्मिन् सत्यपि यदा प्रारब्धादिवशात्पूर्वतोऽपरोक्षात्कर्म तदा पात्रस्य स्वल्पत्वान्महत्याः कृपायास्तस्मिन्न माने तत्र स्वीकर्षस्फूर्तौ भगवदाज्ञाभङ्गादापराधे जाते भगवतोऽप्रसन्नता भवेत्तथापि भगवद्रूपरूपायाः सेवाया नित्यं क्रियमाणत्वात् 'न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि,' इत्येकादशे भगवद्वाक्यात् सेवाया नाशाभावेना पराधजनितपश्चात्तापोत्पत्तौ चिन्तासम्भवे क्रियमाणकरिष्यमाणसेवयोरनाधिदैविकीत्वं स्यादिति तन्निवृत्त्यर्थमस्मिन् ग्रन्थे विचारात्मकं साधनमुपदेष्टुं तत्र विश्वासाय स्वाख्यायिकां ग्रन्थे वदिष्यन्तो 'मनोवशेऽन्ये ह्यभवंस्म देवा मनस्तु नान्यस्य वशं समेति, भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेवः' इति भिक्षुगीतावाक्यान्मनस एव दुष्टत्सुत्पादकतया तस्यैव साधनीयत्वं निश्चित्य स्ववाक्यश्रवणार्थं स्वीयानामन्तःकरणमेवाभिमुखीकुर्वन्ति । अन्तःकरणेत्यादि ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात् परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

यद्यप्यन्तःकरणपदं स्वपरान्तःकरणसाधारणं तथाप्युपसंहारे 'भक्तो निश्चिन्ततां व्रजेदि'तिफलकथनेन ग्रन्थकरणस्य तादर्थ्ये निश्चायिते परान्तःकरणबोधन एव तात्पर्यावगत्या स्वीयानां भक्तानामेव यदन्तःकरणं तद्ग्रहणस्यैवौचित्यात्तदेव ग्राह्यम् । श्रीगो-

---

१ ( सन्तु-भवन्तु ) २ 'पूर्वेषां देहजीवयोः' इति स्वहस्तलेखपाठः । पूर्वेषां देहजीवयोः दोषाणाम्' इत्यन्यप्रतिष्वपि पाठः ।

कृष्णायास्तु स्वसौभाग्यप्रदर्शनार्थं स्वीयानां भक्तिमार्गप्रदर्शनार्थञ्च श्रीमदाचार्यचरणैः स्वान्तःकरणमेव बोध्यत इत्याहुः । तथैवान्येपि सर्वे । श्रीरघुनाथास्तु स्वान्तःकरणव्यपदेशेनान्येषामेवान्तःकरणं बोध्यत इत्याहुः । ममत्विदमेव रोचते । सौभाग्यप्रदर्शनस्य सुबोधिन्यारम्भस्थेन 'अथं तस्य विवेचितु'मिति श्लोकेनैव कृतत्वात्ततोधिकदर्शनस्य भक्तानुपयोगात् । भक्तिमार्गप्रचारार्थमाविर्भूतत्वेन भक्तान्तःकरणस्यैव साधनीयत्वादिति । तथाचायमर्थः । हे अन्तःकरण ? इन्द्रियान्तरदुर्ज्ञेय ? त्वं मद्वाक्यं 'योन्तर्बहिस्तनुभृतामि'त्येकादशीयपद्यपादा'चार्यचैत्त्यवपुषा' हुताशनरूपेण स्वगति व्यञ्जतो वस्तुतः कृष्णत्वेन चाप्ततमस्य मम वाक्यं वक्ष्यमाणं त्वद्धितकरं ग्रन्थरूपं सावधानतया शृण्वाकर्णयेति । एवमभिमुखीकृत्य ब्रह्मसम्बन्धकरणपूर्वकसेवया स्वस्य व्रजभक्तमार्गीयत्वेन भगवदनुभावदर्शित्वादिना च स्वस्मिन्नुत्कर्षस्फूर्त्या भगवदाज्ञादौ प्रमत्यदृष्टान्तेन प्रमादवन्तं प्रति तदभावाय तेभ्योपि भगवत उत्कर्षं पूर्वं भावयितुमाहुः । कृष्णादित्यादि । वस्तुतः श्रुत्यादिरूपतया निर्गुणसेवया च लोकवेदोक्तदोषवर्जितं दैवं भागवतसक्रीडानां देवीनां कदम्बकं कृष्णात्परं भिन्नं न । उत्कृष्टं वा न । 'तस्मान्न भिन्ना एतास्तु' इति तापनीयश्रुतेः, उत्कर्षस्य निरवधिसदानन्दरूपे भगवत्येव विश्रान्तेश्च । अतस्तदीयतया तद्दृष्टान्तेन स्वोत्कर्षं विभाव्य मौढ्या भगवदनभिमेतं न कार्यम् । तासामप्यागन्तुकदोषोत्पत्तौ ताः प्रत्यपि पञ्चाध्याय्यां 'प्रश्नमाय प्रसादाय तत्रैवान्तरधीयते'तिवाक्येन भगवत्तिरोधानस्योक्तत्वादिति । अत्र भावनार्थकक्रियापदाभावाद्यपि वाक्यस्य साकाङ्क्षत्वं तथाप्यग्रे उपान्त्ये विचारयेति क्रियाया वक्ष्यमाणत्वादेतेष्वान्तरवाक्येष्वपि दूरतरापि सैव योग्या, न तु क्रियान्तरमध्याहार्यम् । 'दूरान्वयापेक्षयाऽध्याहारस्य गुरुत्वात्' । तथा नेति विचारयेत्यर्थः । एवमग्रे यथायोग्यं बोध्यम् ॥ १ ॥

एवं मौढ्यहेतुं निवार्य्य जीवस्य पुनस्तथात्वाभावाय दैन्यसिद्ध्यर्थं स्वभावतो निकर्षं बोधयितुं दृष्टान्तमाहुः । चाण्डालीत्यादि ।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमानेपि मूलतः का क्षतिर्भवेत् ॥ २ ॥

प्रारब्धवशादतिदुष्टकुलोत्पन्नापि, केनचिद्गुणेन कथञ्चिद्राजपत्नी, राजा पतिर्यस्यास्तादृशी, राज्ञः पत्नीव पत्नी, पतनात् पत्नी, राज्ञो भोग्या सती राज्ञा मानिता च जाता । तस्याः कदाचित् कालविशेषे अपमाने; अर्थाद्राज्ञा कृते चाशब्दादनपमानेपि मूलतो अपमानहेतुभूताच्चाण्डालीत्वादनपमानहेतुभूताद्राजपत्नीत्वाच्च का क्षतिः का हानिर्भवेत् ? न कापीति विचारयेत्यर्थः । एतस्य वाक्यस्याऽऽचार्यविषयत्वं यैरुक्तं; तत्पक्षे तु

*' मृगयुरिव कपीन्द्र'मित्यादौ हेतुवत्शास्त्रथा भक्तैर्भगवति दोष आरोपितस्तथाऽऽचार्यैः स्वस्मिन्निति बोध्यम् ॥ २ ॥

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिके तत्साम्यं वदन्तस्तादृग्विचारफलमाहुः । समर्पणादित्यादि ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

समर्पणात् भजनार्थकसंस्काररूपात् स्वसर्वतद्विवाहपनिवेदनाद्राजपरिग्रहस्थानीयात् पूर्वमहं प्राकृतः, चाण्डालीवत्सहजमागन्तुकदोषदुष्टः, किं सदा सर्वकालमभिव्याप्य, उत्तम उत्कृष्टः स्थितः ? । किं शब्दः काकुं स्फोरयति । अपि तु न स्थितः । किन्तु, समर्पणादेवोत्कृष्टो राजपत्नीत्वाच्चाण्डालीवदुत्कर्षवान् जातः । अतः स्वपूर्वस्थितिविचारे राजकृतापमानतुल्यभगवदुपसन्नतायां जातायां मम चाण्डालीवदुत्कृष्टस्याधमता निकृष्टता का भाव्या ? । कतमा भवत्री ? । यतो यया कृत्वा, पश्चात्तापस्तज्जनितखेदविशेषो मे भवेत् ? । नहि प्राकृतरूपा, तस्याः सहजत्वात् । नाप्यभगवदीयरूपा, भगवता अत्यक्तत्वात् । अङ्गीकारात्मकस्यापि भगवद्धर्मस्य नित्यत्वात्, संसारावेशरूपस्य भगवत्त्याग कार्यस्याभावेनाऽऽत्यागनिश्चयाच्च; तेनैवाभिमात्यागानुमितेश्च । अतो जातायामप्युपसन्नतायां पूर्वदशात उत्तमैव दशास्ति; नत्वधमेति पश्चात्तापनिवृत्त्यर्थं विचारय । तथा चैवं विचारे भगवत्प्रसादसाधने दैन्यमप्युद्बुद्धं भविष्यतीत्युपसन्नतापि निवर्त्स्येत इत्यर्थः ॥ ३ ॥

एवं जीवधर्मपुरस्कारेण विचारमुपदिश्य भगवतोऽप्यतिहितत्वानुसन्धानाय भगवद्धर्मपुरस्कारेण तमुपदिशन्ति । सत्येत्यादि ।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥

विष्णुर्व्यापकः, अन्तर्यामितया सर्वान्तः प्रविश्य यो भगवान् सत्यसङ्कल्पतः सत्यो विषयाव्यभिचारी यः सङ्कल्प आलोचनमिदमेवं करिष्यामीत्याकारकस्तस्मादन्यथा प्रकारान्तरेण न करिष्यति । तु शङ्कानिरासे । भगवान्निवेदितात्मनाम् आत्मेन्यसमदपिप्रेतमेव करिष्यतीति शङ्का न कर्तव्या । यतः स तेषामीश्वरो नियामकोपि; अतस्तेषां विकृतेच्छायां तदनुरोधं न करिष्यति, किन्त्वमोघसङ्कल्पत्वात्स्वालोचितमेव करिष्यति, तद्बोधनार्थम् । अयं तुशब्दोक्तः शङ्कानिरास उत्तरवाक्ये हेतुत्वेन प्रविशति । अत एवं

* ( भ्रमरगीते )

शङ्कानिरासाद्धेतोः सततं प्रमादराहित्येन निरन्तरं; आज्ञैव कार्या । अन्यथा प्रमादेनाकरणे स्वामिद्रोहो महानपराधो भवेत् । अत्रापि 'इति विचार्ये'ति पदं सम्बध्यते ॥४॥

सेवकत्वपुरस्कारेण पुनर्विचारान्तरमुपदिशन्ति । सेवकस्येत्यर्द्धेन ।

सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ।

तु पुनरयं वक्ष्यमाणः सेवकस्य धर्मस्तं व्यक्तीकुर्वन्ति । स्वामी स्वस्य करिष्यतीति । स्वामी भर्ता स्वस्यात्मीयस्य मम करिष्यति, मदर्थं यद्यदालोचितं तत् करिष्यति । अत्रापि तथा सम्बन्धः ।

सेवकत्वविचारस्यावश्यकत्वाय तेनोपदेशे विश्वासार्थं स्वाख्यायिकामुपदिशन्ति द्वाभ्याम् ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥
पश्चात्तापः कथं तत्र सेवकोऽहं न चान्यथा ।

आज्ञेत्यादि । तुरवधारणे । पूर्वमेव गङ्गासागरसङ्गमप्रदेशे समीपे वा या आज्ञा जाता पश्चात्तदुत्तरकाले मधुवने मथुरायामपि याऽऽज्ञा जाता, तद्द्वयं मया भगवता स्वात्मानुभावप्रकटनार्थं श्रीभागवतगूढार्थप्रकटनार्थं चाज्ञप्तेन न कृतम् । तयोर्विषयः क इत्याकाङ्क्षायां तयोर्विषयमाहुः । देहदेशपरित्यागः । द्वन्द्वान्ते श्रूयमाणस्य परित्यागशब्दस्य प्रत्येकमभिसम्बन्धः । तथा च पूर्वा देहत्यागविषयिणी, द्वितीया देशत्यागविषयिणीति सिद्ध्यति । तदकरणे बीजन्तु नाभिमानो न वा शास्त्रविरोधः । किन्तु श्रीभागवतार्थप्रकटनार्थाज्ञाकार्यसम्पत्तिरेव । नहि देहे त्यक्ते साऽऽज्ञा सिद्ध्यति; वाग्व्यापारस्य तद्धेतुकत्वेन तदभावे तस्याप्यभावात् । प्रकारान्तरेणोक्तौ च कलिग्रस्तानां विश्वासाभावात् । नापि भगवद्देशे त्यक्ते देशान्तरस्यानीदृशत्वेनैतद्विचारप्रतिबन्धकत्वात् । तदेतद्द्वयार्थं आचार्यैराज्ञाद्वयं न कृतम् । भगवतस्त्वयमाशयः । देह उपचयः; देशो दानम्; 'दिह उपचये,' 'दिश अतिसर्जने' इति धातुनिष्पन्नत्वाद्यौगिकार्थेतौ शब्दावाशयामुक्तौ । तथा च, उपचयो बाहुल्यं दानञ्च परित्यक्तव्यम् । न च पूर्वाज्ञासम्पूर्तिदोषः । यावदुक्तमेतावत्कृत्यैव साऽऽज्ञा कृताऽस्तु; अधिकं न कार्यम् । रहस्यप्रकाशस्यानभिप्रेतत्वात् । अधिककरणेनानधिकारिणामपि तज्ज्ञानसम्भवेन कृतार्थतापसक्तावधिकार्यनधिकारिविभागभङ्गापत्तेः । इदञ्च सुस्पष्टीकातिरोधानस्कन्धक्रमव्याख्यात्याजनद्वयप्रस्कन्धव्याख्यानानन्तरसामयिकमाधवभट्टकाश्मीरिशरीरशराहतिप्रभृतिभिः कार्ये-

*‘मृगपतिरिव कपीन्द्र’मित्यादौ क्लेशवशाद्यथा भक्तैर्भगवति दोष आरोपितस्तथाऽऽचार्यैः स्वस्मिन्निति ध्येयम् ॥ २ ॥

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिके तत्साम्यं वदन्तस्तादृग्विचारफलमाहुः । समर्पणादित्यादि ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

समर्पणात् भजनार्थकसंस्काररूपात् स्वसर्वसहितात्मनिवेदनात् राजपरिग्रहस्थानीयात् पूर्वमहं प्राकृतः, चाण्डालीवत्सहजागन्तुकदोषदुष्टः, किं सदा सर्वकालाभिव्याप्य, उत्तम उत्कृष्टः स्थितः ? । किं शब्दः काकुं स्फोरयति । अपि तु न स्थितः । किन्तु, समर्पणादेवोत्कृष्टो राजपत्नीत्वाच्चाण्डालीवदुत्कर्षवान् जातः । अतः स्वपूर्वस्थितिविचारे राजकृतावमानतुल्यभगवदुपसन्नतायां जातायां मम चाण्डालीवद्दुष्टस्याधमता निकृष्टता का भाव्या ? । कतमा भवत्री ? । यतो यया कृत्वा पश्चात्तापरतज्जनितखेदविशेषो मे भवेत् ? । नहि प्राकृतरूपायाः तस्याः सहजत्वात् । नान्यभगवदीयरूपायाः भगवता अत्यक्तत्वात् । अङ्गीकारात्मकस्यापि भगवद्धर्मस्य नित्यत्वात्, राजस्थानीयरूपस्य भगवत्त्यागकार्यस्याभावेनात्यागनिश्चयाच्च; तेनैवाग्रिमात्यागानुमितेश्च । अतो जातायामप्युपसन्नतायां पूर्ववशात् उत्तमैव दशास्ति; नत्वधमेति पश्चात्तापनिवृत्त्यर्थं विचारय । तथा चैवं विचारे भगवत्प्रसादसाधनं दैन्यमप्युद्बुद्धं भविष्यतीत्युपसन्नतापि निवर्त्स्यतीत्यर्थः ॥ ३ ॥

एवं जीवधर्मपुरस्कारेण विचारमुपदिश्य भगवतोऽप्रतिहतेच्छत्वानुसन्धानाय भगवद्धर्मपुरस्कारेण तदुपदिशन्ति । सत्येत्यादि ।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥

विष्णुर्व्यापकः, अन्तर्यामितया सर्वान्तः प्रविश्य यो भगवान् सत्यसङ्कल्पतः सत्यो विषयाव्यभिचारी यः सङ्कल्प आलोचनमिदमेवं करिष्यामीत्याकारकं तस्मादन्यथा प्रकारान्तरेण न करिष्यति । तुः शङ्कानिरासे । भगवन्निवेदितात्मनाम् आत्मेच्छया मदभिप्रेतमेव करिष्यतीति शङ्का न कर्तव्या । यतः स तेषामीश्वरो नियामकोऽपि; अतस्तेषां विकृतेच्छायां तदनुरोधं न करिष्यति, किन्त्वमोघसङ्कल्पत्वात्स्वालोचितमेव करिष्यति, तद्धितार्थम् । अयं तुशब्दोक्तः शङ्कानिरास उत्तरवाक्ये हेतुत्वेन प्रविशति । अत एवं

* ( भागवते )

शङ्कानिरासाद्धेतोः सततं प्रमादराहित्येन निरन्तरं; आज्ञैव कार्या । अन्यथा प्रमादेनाकरणे स्वामिद्रोहो महानपराधो भवेत् । अत्रापि 'इति विचारये'ति पदं सम्बध्यते॥४॥

सेवकत्वपुरस्कारेण पुनर्विचारान्तरमुपदिशन्ति । सेवकस्येत्यर्द्धेन ।

सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।

तु पुनरयं वक्ष्यमाणः सेवकस्य धर्मस्तं व्यक्तीकुर्वन्ति । स्वामी स्वस्य करिष्यतीति । स्वामी भर्ता स्वस्यात्मीयस्य मम करिष्यति, मदर्थं यद्यदालोचितं तत् करिष्यति । अत्रापि तथा सम्बन्धः ।

सेवकत्वविचारस्यावश्यकत्वाय तेनोपदेशे विश्वासार्थं स्वाख्यायिकामुपदिशन्ति द्वाभ्याम् ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥
पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।

आज्ञेत्यादि । तुरवधारणे । पूर्वमेव गङ्गासागरसङ्गमप्रदेशे समीपे वा या आज्ञा जाता पश्चात्तदुत्तरकाले मधुवने मथुरायामपि याज्ञा जाता, तद्द्वयं मया भगवता स्वात्मानुभावप्रकटनार्थं श्रीभागवतगूढार्थप्रकटनार्थं चाज्ञप्तेन न कृतम् । तयोर्विषयः क इत्याकाङ्क्षायां तयोर्विषयमाहुः । देहदेशपरित्यागः । द्वन्द्वान्ते श्रूयमाणस्य परित्यागशब्दस्य प्रत्येकमभिसम्बन्धः । तथा च पूर्वा देहत्यागविषयिणी, द्वितीया देशत्यागविषयिणीति सिद्ध्यति । तदकरणे बीजन्तु नाभिमानो न वा शास्त्रविरोधः । किन्तु; श्रीभागवतार्थप्रकटनार्थाज्ञाकार्यसम्पत्तिरेव । नहि देहे त्यक्ते साक्षा सिद्ध्यति, वाक्यपारस्य तद्धेतुकत्वेन तदभावे तस्याप्यभावात् । प्रकारान्तरेणोक्तौ च कलिग्रस्तानां विश्वासाभावात् । नापि भगवद्देशे त्यक्ते देशान्तरस्यानीदृशत्वेनैतद्विचारप्रतिबन्धकत्वात् । तदेतदवधार्य आचार्यैराज्ञाद्वयं न कृतम् । भगवतस्त्वयमाशयः । देह उपचयः ; देशो दानम् ; 'दिह उपचये,' 'दिश अतिसर्जने' इति धातुनिष्पन्नत्वाद्यौगिकावेतौ शब्दावाज्ञायामुक्तौ । तथा च, उपचयो बाहुल्यं दानञ्च परित्यक्तव्यम् । न च पूर्वोक्तासम्पूर्त्तिदोषः । यावदुक्तमेतावत्कृत्यैव साज्ञा कृतास्तु; अधिकं न कार्यम् । रहस्यप्रकाशस्यानभिमेतत्वात् । अधिककरणेनानधिकारिणामपि तज्ज्ञानसम्भवेन कृतार्थतामसक्ताविधिकार्यनधिकारिविभागभङ्गापत्तेः । इदञ्च सूक्ष्मटीकातिरोधानस्कन्धक्रमव्याख्यात्याजनदशमस्कन्धव्याख्यानानन्तरसामयिकमाधवभट्टकाश्मीरिशरीरधराहृतिप्रभृतिभिः कार्य-

रत्युपीयते । सोयमाचार्यैर्नाविष्कारितः । न चाचार्याणां भगवदाज्ञार्थानवधारणकथनमयुक्तमिति शङ्कयम् ; भक्तानां पञ्चाध्यायीस्थस्कन्धारोहणवाक्यार्थाज्ञानवत् सम्भवात् । तदा तृतीयाज्ञा जाता । तद्विषयस्तृतीयपरित्यागः स लोकगोचरः । 'लोकस्तु भुवने जन' इति कोशाज्जनविषयः । स च संन्यासेन भव'त्येकचार्यनिकेतः स्यादि'त्यादिवाक्यैः संन्यासे तथात्वात् । तत्र तादृश्यामाज्ञायां जातायां पश्चात्तापो मम जात इति शेषः । स कथं केन प्रकारेणेति विचार्यमाणे, सेवकोहं; अहं सेवक इति सेवकत्वप्रकारेणाज्ञाभङ्गकरणहेतुकः । न पुनरन्यथा न, स्वचिकीर्षितकार्यासम्पूर्त्यादिहेतुको न । अतो मत्कृत्यादिविचारेपि मत्सेवकत्वपुरस्कारेण विचारात् पश्चात्ताप एव युक्त इत्यर्थः ।

* 'आज्ञा पूर्वन्तु या जाते'त्यत्र । अत्रेदं बोध्यम् । प्राकट्यात् पूर्वं हि 'अर्थं तस्य विवेचितुम्' इत्यनेनोक्ताज्ञा जाता, तदनन्तरमाज्ञाद्वयं देहदेशपरित्यागविषयं गङ्गासागरसङ्गमे मधुरायाञ्च जातमिति । एवमाज्ञात्रयं सिद्धम् । तत्र श्रीमदाचार्येष्वतिकरुणत्वमस्ति न वेति लोकानां संशयनिवारणार्थं पुष्टिमार्गस्थत्वात् स्वस्य वा तदर्थं प्राकट्यानन्तरमाज्ञाद्वयमतिकरुणत्वविरोधिमात्रम्, तदाज्ञाद्वयं स्वस्य भगवतश्च स्वाङ्गीकृतेषु अतिकरुणत्वख्यापनार्थं न कृतम्, तत्कृतौ हि सर्वथाज्ञायां न स्थाने च स्वाङ्गीकृतानामनुद्धारः स्यात्, तेन चोभयस्य करुणत्वं न स्यात्, यदि तदेव न स्यात्तदा पूर्वं तदर्थं नाज्ञापयेत् । भगवान् स्वयं च नाविर्भूयात् । नत्वेवम् । अतः परोक्षार्थत्वादन्तःकरणगोचरा । अतो न विशेषगत्यादि कृतमित्यर्थः । न च पूर्वयैव तत्सम्भवे किं देहत्यागविषयिण्या तयेति वाच्यम्, क्रीडादेशे त्यक्ते विरहेण स्वयमेव देहं त्यक्ष्यन्तीति तेनातिकरुणत्वमेव परीक्षितं न भविष्यतीति भगवदभिप्रायः । श्रीमदाचार्यैस्तु तदपि तथैव ज्ञातमिति सापि न कृतेति भावः । मन्मनसेवाशयो भगवतः श्रीमदाचार्याणाञ्च तथैव ज्ञानं जातं, इत्यत्र किं मानमित्यपेक्षायां भगवदादिसर्वसम्मतं हेतुमाहुः । तृतीयो लोकगोचर इति । तद्व्यपेक्षया पूर्वमाज्ञाः सर्वोद्धारः लोकगोचर इति न किञ्चिद् अलौकिकं मानं वाच्यम् । किन्तु सर्वलोकप्रसिद्धमेव मानमित्यर्थः । एवं कृते पश्चात्तापः कथम् ? न कथमपि । यतः सेवकधर्मोन्तःकरणकमाज्ञाकरणम्, न चान्यथा तद्विरुद्धमित्यर्थः । अत एव श्रीमदाचार्यैराज्ञप्तं विवेकधैर्याश्रये 'विशेषतश्चेदाज्ञा स्यादि'त्यनेनेतिदिक् । (इति स्वतन्त्रलेखः) ॥ ५–६ ॥

ननु युक्तोयं विचारस्तथापि पूर्वापराधजनितभगवदप्रसन्नतायाः अनिवृत्तौ भयरूपोपमुद्वेगः, स कथं निवर्त्ततामित्याशङ्कायां तदर्थं विचारान्तरमुपदिशन्ति । लौकिकप्रभुवदित्यादि ।

* श्रीद्वारकेशचरणानामेतदपि स्वतन्त्रलेख । लिखितश्च स्वहस्ताक्षरैः । अत एवात्र निवेशितः ।

लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥
सर्वं समर्पितं भक्त्या कृतार्थोसि सुखी भव ।

लौकिका हि प्रभवोपराधेनाक्षमाः कस्यचित्प्रसीदन्ति, कस्यचिन्न प्रसीदन्ति, तद्वत् कृष्णो भगवान् कदाचन अवतारकालेऽनवतारकाले च न द्रष्टव्यः । अवतारकाले 'अहो बकीयमि'तिवाक्येन अनवतारकाले च चरणश्रुत्या 'प्रह्लादाय यदा द्रुह्येद्धनिष्येपि परोर्जितमि'ति देवान् प्रति भगवद्वाक्येन चापराधसन्तृत्वपूर्वकसत्फलदातृत्वस्य भक्ते कृपापरत्वस्य च सिद्धत्वात् । त्वया च सर्वं भक्त्या भगवते समर्पितमतो भक्तत्वात् कृतार्थोसि । 'एवं धर्मैर्मनुष्याणामि'तिवाक्ये भगवता भक्तौ जातायां निरवशेषार्थप्राप्तिकथनात् सर्वं साधनरूपं फलरूपं चार्थं प्राप्तवानसि । अतः सुखी भव, दौर्मनस्यनिवारणेन निश्चिन्तो भवेत्यर्थः । इयं चोक्तविचारात्मकाज्ञाकर्तुः प्रभुभिराशीरेव दीयते ।

अतः परं विद्यमानेपि दैहिके सेवासामर्थ्ये पूर्वोक्तखेदेन वा देहाध्यासेन वा कार्यान्तराभिनिवेशादिना वा दैहिकसेवायां प्रमादान्तं प्रति पुनर्विचारान्तरमुपदिशन्ति । प्रौढापीत्यादि ।

प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्त्तव्यं वरस्तुष्यति नान्यथा ।

प्रौढा भर्तृसकलकार्ययोग्या तत्समर्थापि दुहिता यद्वत् यथा, स्नेहाद् इयं बाला पतिगृहे महत्कार्यं कर्तव्यं तत् कुर्वन्ती श्रान्ता क्लिष्टा च भविष्यतीति ज्ञात्वा वरे भर्तृसमीपे न प्रेष्यते, तथा तद्वद्देहे स्नेहात् सेवां विना स्थापनं न कर्तव्यम् । तत्र हेतुः । वरस्तुष्यति नान्यथेति । अन्यथा प्रेषणविरुद्धे प्रकारान्तरे वरो न तुष्यति; तथा शरीरेण सेवाया अकरणे भगवानपि न तुष्यति । एतस्य देहस्य भगवता स्वसेवार्थमेव दत्तत्वात्; 'भवाय नाशाये'ति पञ्चमस्कन्धीये वाक्ये तथैव प्रतिपादितत्वात् । अत एवं विचारेण पूर्वोक्तदोषान्यत्कृत्याक्षसेवैव कार्येत्यर्थः ।

अथापराधेन प्रतिबन्धादिना वा देहस्य तदर्थतायां सन्देहे विचारान्तरमुपदिशन्ति । लोकवच्चेदित्यादि ।

लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ।

लोका यथा संसारासक्ता नानास्वभावास्तत्र तत्र तेन तेन क्लेशादिना प्रवर्तन्ते, तद्वच्चेन्मे स्थितिः स्यात्; उक्तरीत्या पश्चात्तापो न स्यात् तदा किं स्यात्? लोकतुल्यतैव स्यात् । सा तु मे न जाता, अतो मदुपरि भगवान् दयां करोतीति विचारय ।

तथा चैवं विचार्य देहस्य सेवार्थत्वं निश्चितुहि; निश्चित्य चाज्ञां कुर्वित्यर्थः । एवमुक्तया सेवाकरणेऽपि पुनः प्रतिबन्धसम्भवश्चेत्तत्राप्युपायमाहुः । अशक्य इत्यादि । पूर्वोक्तं कर्तुमशक्यं चेद् भातं तदा हरिः सर्वसमर्थकर्ता भगवानेवास्ति । 'सर्वधर्मान् परित्यज्ये'तिवाक्ये स्वस्य प्रपन्नसर्वपापनिवारकत्वं वदन् रक्षकोऽस्तीति विचारय । कथञ्चन, केनापि पूर्वमुक्तेन कृतेनानुक्तेन भाविना सम्भावितेन वा प्रकारेण मोहं वैचित्यं प्रयान: परं किं भविष्यतीति मौढ्यात्मकमुद्वेगं मा गाः । एवं भगवतः शरणत्वविचारेणैव सर्वोद्वेगनिवृत्त्या भगवत्कृपाया अभिव्यक्तेरित्यर्थः ।

एवं सर्वं विचारवाक्यमुक्त्वोपसंहरन्ति । इतीत्यादि ।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ॥ १० ॥
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥

चित्तं प्रति अन्तःकरणं लक्षीकृत्य उद्दिश्य श्रीकृष्णदासस्य हितं सुखसम्पादकं वल्लभस्य भगवतो भक्तानां च प्रियस्य वचः विचारोपदेशवाक्यम्, इति एतावद् शरणोपदेशान्तमेव नाधिकं, यदाकर्ण्य श्रुत्वा भक्तः पूर्वोक्तः कृतापराधोऽपि निश्चिन्ततानुद्वेगनिवारणेन चिन्ताराहित्यं व्रजेत् प्राप्नुयादित्यर्थः ।

अनेनैतत् सिद्धम् ।

( १ ) भगवान् समाऽप्यधिकाराहित्यात् स्वतन्त्रः ।

( २ ) मार्गप्रवर्तका भक्ताः स्वरूपतो दोषरहिता भगवल्लोकभक्तपक्षपातयाऽपि भगवदधीना एव भगवदभिप्रायज्ञाः स्वस्य तन्मार्गीयत्वेऽपि मार्गप्रवर्तकभक्तवत् स्वस्य भगवदाज्ञाभङ्गोऽनभिप्रेतकरणं च न युक्तम् ।

( ३ ) स्वस्य स्वभावतो दोषसत्त्वेऽपि समर्पणादुत्कर्षो भवतीति कृपाबाहुल्येऽपि स्वोत्कर्षो न भावनीयः ।

( ४ ) भगवतः सत्यसङ्कल्पत्वात् किं चिकीर्षतीति तदिच्छायाश्च ज्ञातुमशक्यत्वात् सर्वदा तदाज्ञैव कर्त्तव्या । तदकरणे 'आज्ञाभङ्गो नरेन्द्राणामि'तिवद् स्वामिद्रोहात्मको महान् अपराधः स्यात् ।

( ५ ) किञ्च, अहं सेवक इति मदनुरूपं यत् तत् स्वामी एव करिष्यतीति विचारः सेवकस्योचित इत्यतोऽप्याज्ञैव कार्या । नाप्याचार्यकृतिदृष्टान्तेन स्वयं मौढ्यं कर्त्तव्या । तैरपि स्वमौढ्या तथाकृतौ पश्चात्तापत्वस्यैवोक्तत्वात् पश्चात्तापस्यापि सेवकत्वमयुक्तानाया एवोक्तत्वाच्च ।

( ६ ) किञ्च, भगवान् न लौकिकप्रभुवद् अपराधेन कुपितः परित्यजति । भगवद्धर्मरूपस्याङ्गीकारस्यापि नित्यत्वात् । स्वस्य चाङ्गीकृतौ समर्पणादिनानुमितायां

भगवदुक्ततद्धर्माचरणे उपक्रमदशायामपि फलतः साधनतश्च नैगुण्याभावस्योद्धवं प्रति स्वयमेवोक्तत्वात् कृतार्थतैव भवत्रीति भावनीयम् । न तु सन्देग्धव्यम्, 'अश्रद्दधानश्चे'ति वाक्येन भगवता दोषस्यैवोक्तत्वात् ।

( ७ ) किञ्च; देहोपि मौद्दुहितृप्रेषणन्यायेन देहार्थं स्वार्थं न संरक्ष्यः । किन्तु, येन केनचिदुपायेन भगवति एव विनियोक्तव्यः । भगवतास्य देहस्य स्वसेवार्थमेव दत्तत्वात् । तदकरणे लोकतौल्यमेव स्यात् । यदि पुनरस्य तत्र विनियोजने प्रतिबन्धसम्भवस्तदा भगवानेव शरणत्वेन भावनीयः । एतदतिरिक्तस्योपायान्तरस्याभावात् । प्रतिबन्धो हि भगवन्मायया, तस्यास्तत्राधिकृतत्वात् । तच्चरणोपायश्च प्रपत्तिरेव नान्य इति भगवतैव गीतायामाज्ञापनादिति ।

इति श्रीमद्वल्लभाचार्यचरणैकतानपीताम्बरात्मजपुरुषोत्तमकृतौ
अन्तःकरणप्रबोधविवरणं सम्पूर्णम् ।



तया चैवं विचार्य देहस्य सेवार्थत्वं निश्चित्य हि; निश्चित्य चाज्ञां कुर्वित्यर्थः । एवमुक्तया सेवाकरणेऽपि पुनः प्रतिबन्धसम्भवश्चेत्तत्राप्युपायमाहुः । अशक्य इत्यादि । पूर्वोक्तं कर्तुमशक्यं चेद् भातं तदा हरिः सर्वदुःखसर्वाघहर्त्ता भगवानेवास्ति । 'सर्वधर्मान् परित्यज्ये'तिवाक्ये स्वस्य प्रपन्नसर्वपापनिवारकत्वं वदन् रक्षकोऽस्तीति विचारय । कथञ्चन, केनापि पूर्वमुक्तेन कृतेनानुक्तेन भाविना सम्भावितेन वा प्रकारेण मोहं वैचित्यं प्रमातः परं किं भविष्यतीति शोकात्मकमुद्वेगं मा गाः । एवं भगवतः शरणत्वविचारेणैव सर्वोद्वेगनिवृत्त्या भगवत्कृपाया अभिव्यक्तेरित्यर्थः ।

एवं सर्वं विचारवाक्यमुक्त्वोपसंहरन्ति । इतीत्यादि ।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ॥ १० ॥
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥

चित्तं प्रति अन्तःकरणं लक्षीकृत्य उद्दिश्य श्रीकृष्णदासस्य हितं सुखसम्पादकं वल्लभस्य भगवतो भक्तानां च प्रियस्य वचः विचारोपदेशवाक्यम्; इति एतावद् शरणोपदेशान्तमेव नाधिकं; यदाकर्ण्य श्रुत्वा भक्तः पूर्वोक्तः कृतापराधोऽपि निश्चिन्ततामुद्वेगनिवारणेन चिन्ताराहित्यं व्रजेत् प्राप्नुयादित्यर्थः ।

अथैतत् सिद्धम् ।

( १ ) भगवान् समाभ्यधिकराहित्यात् स्वतन्त्रः ।

( २ ) मार्गप्रवर्तका भक्ताः स्वरूपतो दोषरहिता भगवतोक्तभक्तवश्यतायामपि भगवदधीना एव भगवदभिप्रायज्ञाः स्वस्य तन्मार्गीयत्वेऽपि मार्गप्रवर्तकभक्तवत् स्वस्य भगवदाज्ञाभङ्गोऽनभिप्रेतकरणं च न युक्तम् ।

( ३ ) स्वस्य स्वभावतो दोषसत्त्वेऽपि समर्पणादुत्कर्षं प्राप्स्यतीति कृपायां तुल्यत्वेऽपि स्वोत्कर्षो न भावनीयः ।

( ४ ) भगवतः सत्यसङ्कल्पत्वात् किं चिकीर्षतीति तदिच्छायाश्च ज्ञातुमशक्यत्वात् सर्वदा तदाज्ञैव कर्तव्या । तदकरणे 'आज्ञाभङ्गो नरेन्द्राणामि'तिवत् स्वामिद्रोहात्मको महान् अपराधः स्यात् ।

( ५ ) किञ्च, अहं सेवक इति मदनुरूपं यत् तत् स्वामी एव करिष्यतीति विचारः सेवकस्योचित इत्यतोऽप्याज्ञैव कार्या । नाप्याचार्यकृतिदृष्टान्तेन स्वयं मौढ्यं कर्तव्यम् । तैरपि स्वप्रोद्या तथाकृतौ पश्चात्तापस्यैवोक्तत्वात् पश्चात्तापस्यापि सेवकत्वप्रयुक्ततायाः एवोक्तत्वाच्च ।

( ६ ) किञ्च; भगवान् न लौकिकप्रभुवद् अपराधेन कुपितः परित्यजति । भगवद्धर्मरूपस्याङ्गीकारस्यापि नित्यत्वात् । स्वस्य चाङ्गीकृतौ समर्पणादिनानुमितायां

भगवदुक्तसद्धर्माचरणे उपक्रमदशायामपि फलतः साधनतश्च वैगुण्याभावस्योद्धव प्रति स्वयमेवोक्तत्वात् कृतार्थतैव भवतीति भावनीयम्। न तु सन्देग्धव्यम्, 'अश्रद्दधानश्चे'ति वाक्येन भगवता दोषस्यैवोक्तत्वात्।

(७) किञ्च; देहोपि मौढदुहितृप्रेषणन्यायेन देहार्थं स्वार्थं न संरक्ष्यः। किन्तु, येन केनचिदुपायेन भगवति एव विनियोक्तव्यः। भगवतास्य देहस्य स्वसेवार्थमेव दत्तत्वात्। तदकरणे लोकतौल्यमेव स्यात्। यदि पुनरस्तस्य तत्र विनियोजने प्रतिबन्धसम्भवस्तदा भगवानेव शरणत्वेन भावनीयः। एतदतिरिक्तस्योपायान्तरस्याभावात्। प्रतिबन्धो हि भगवन्मायया, तस्यास्तत्राधिकृतत्वात्। तत्तरणोपायश्च मत्प्रपत्तिरेव नान्य इति भगवतैव गीतायामाज्ञापनादिति।

इति श्रीमद्वल्लभाचार्यचरणैकतानपीताम्बरात्मजपुरुषोत्तमकृतौ
अन्तःकरणप्रबोधविवरणं सम्पूर्णम्।

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तर्गतो-अष्टमो

# विवेकधैर्याश्रयः

चतसृभिष्टीकाभिः समलंकृतः

१. श्रीरघुनाथाना दीपिका
२. श्रीगोपेशाना विवृतिः
३. श्रीगोकुलोत्सवाना विवृति
४. श्रीव्रजरायाणा विवृति

श्रीमद्-वल्लभाचार्य-महाप्रभु-प्रवर्तित-शुद्धाद्वैत-सम्प्रदायस्य-सप्त-
पीठान्तर्गत- सप्तम- पीठाधिष्ठित- नित्यलीला- स्थित-
गोस्वामिश्री १००८ श्रीरमणजी-महाराजश्रीत्पेतेषा-
-स्मृतो-तदात्मजे -गोस्वामिश्री १००८
श्रीरघुनाथलाल-महाराजश्रीत्येतै
प्रकाशित

प्रकाशक
गोस्वामिश्री १००८ श्रीरघुनाथलालमहाराज
मनुभवन, भगतसिंह मार्ग,
पार्ले (पश्चिम) बम्बई ४०० ०५६ भारत

साधारणसंस्करण २,००० प्रति

राजसंस्करण १,००० प्रति

श्रीवल्लभाब्द ५०३

ग्रन्थ-परिचय लेखक गोस्वामी श्याम मनोहर

मुद्रक
स्टूडियो वहार, २३-ए, सेन्ट्रल चौपाटी बिल्डिंग, चौपाटी,
बम्बई-४०० ००७.



गोस्वामिश्री १००८ श्री रमणजी महाराज

।। श्रीकृष्णाय नमः ।।

।। श्रीमदाचार्यचरणकमलेभ्यो नमः ।।

# ग्रन्थ-परिचय

कब कहाँ और किस प्रसंगमे विवेकधैर्याश्रय ग्रन्थका प्रणयन हुआ यह पता नही चलता.

वैसे तो विवेक धैर्य तथा आश्रय का सम्बन्ध प्रपत्तिमार्गके साथ अधिक घनिष्ट है किन्तु भक्तिमार्गमें प्रवृत्त होनेवाले पुष्टिजीवोके लिए विवेक धैर्य तथा आश्रय भगवत्सेवामें भी उपयोगी होते ही है वास्तविकता तो यह है कि इन तीनोकी कर्म ज्ञान एवम् भक्ति रूप तीनों ही मार्गमें अपेक्षा रहती है. 'विवेक' 'धैर्य' या 'आश्रय' शब्द सामान्य अर्थोमे श्रीमहाप्रभुको विवक्षित नहीं है अपितु एक निश्चित पारिभाषिक अर्थमें ही विवक्षित है.

यथा :

(१) विवेक = हरिः सर्वं निजेच्छातो करिष्यति

(२) धैर्य — त्रिदुःखसहनमामृते सर्वत सदा

(३) आश्रय = ऐहिके पारलोके च सर्वथा शरण हरिः

इन्ही पारिभाषिक अर्थोमे विवेक धैर्य तथा आश्रय पुष्टिमार्गीय कृष्णसेवामे उपयोगी बनते है

कृष्णसेवामे प्रवृत्त पुष्टिभक्त किन-किन परिस्थितियोमे कृष्णसेवाकर्तीके लिए आवश्यक विवेक धैर्य या आश्रय को खो सकता है तथा किन उपायोसे इनकी रक्षा सम्भव है आदि विषयोका निरूपण इस ग्रन्थमें हुआ है.

सिद्धान्तमुक्तावलीमे उपदिष्ट सेवाके बाह्य अंगोका निरूपण हमे सिद्धान्तरहस्यमे तथा आभ्यन्तर अंगोका निरूपण नवरत्नमे मिलता है. इन्ही बाह्य तथा आभ्यन्तर साधनोकी सांगोपांगता विवेक-धैर्य-आश्रयके सम्पन्न होनेपर सम्भव होती है. अन्तःकरणप्रबोध ग्रन्थद्वारा जो अन्तरात्माका प्रबोधन किया गया उस प्रबोधनके लिए भी विवेक-धैर्य-आश्रयकी निरतिशय अपेक्षा है.

इन विवेक धैर्य तथा आश्रय का परस्पर सम्बन्ध विलक्षण है जिसे भगवत्स्वरूपमें आश्रय सिद्ध हो जाता है उसे विवेक और धय स्वत ही सिद्ध हो जाते है, अन्यथा विवेक और धैर्य के बिना आश्रय दृढ नही हो पाता. हमारे अविवेक और अधैर्य हमें भगवदाश्रयसे विचलित कर सकते हैं अत अपने जागृत विवेक तथा धैर्य के द्वारा अदृढ आश्रयकी रक्षा आवश्यक होनी है इस तरह विवेक धैर्य एक कोटी हैं तथा आश्रय दूसरी कोटी हैं

यह आश्रय पुष्टिभक्तिका आवश्यक अग होनेपर भी केवल पुष्टिभक्ति ही नही अपितु कर्म-ज्ञान-भक्ति सभी मार्गोंका अनुकल्प है कर्म ज्ञान भक्तिके अनेकविध उपायोको दिखलानेके बावजूद भगवान्ने गीताके अन्तमें– "सर्वधर्मान्परित्यज्य मामेक शरण व्रज" के महान् उपदेशद्वारा एक पृथक् शरणमार्गके रूपम इसी आश्रयको समझाया है भागवतके एकादशस्कन्धम भी इसका स्पष्टीकरण मिलता है– 'तस्मात्त्वमुद्धवोत्सृज्य चोदना प्रतिचोदना प्रवृत्ति च निवृत्ति च श्रोतव्य श्रुतमेव च मामेकमेव शरणमात्मान सर्वदेहिना याहि सर्वात्मभावेन मया स्या ह्यकुतोभयम् ' अर्थ श्रुतिस्मृतिम उत्सग अपवादके रूपमें कहे गये विधि निषध और तत्परित विविध कर्मोमें प्रवृत्ति और निवृत्ति तथा विविध ज्ञानमार्गीय श्रोतव्य श्रुत विषयोके श्रवण-मनन निदिध्यासन आदि किसी भी प्रणालीकी अपेक्षा रखे बिना केवल एकमात्र भगवान्की शरणमे सर्वात्मभावके साथ जाना चाहिये

यहाँ भी इसी आश्रय या पृथक्शरणमार्ग का विवेचन अभीष्ट है

एवमाश्रयण प्रोक्त सर्वेषा सर्वदा हितम् ।
कलौ भक्त्यादिमार्गा हि दु साध्या इति मे मति ।।

अर्थ इस तरह आश्रय सभीके लिए सर्वदा हितकारी सिद्ध होता है क्योकि कलियुगमें भक्ति आदि मार्ग दु साध्य होगये हैं

कर्म ज्ञान या भक्ति के मार्गपर चल सकनेवाले जीवोके लिए विवेक धैर्य आश्रय अच्छी तरह चल पानेमें सम्बल बन जाते है जो इन मार्गोपर चल नही पाते उनके लिए आश्रय ही मार्ग भी बन जाता है और चल पानेका बल भी ।

आश्रयका सुलभतम स्वरूप श्रीमहाप्रभुने इस तरह समझाया है•

यदशक्यं च तत्सर्वं भवेदन्यथा तदभावे स्वशक्यमपि न भवेदित्यर्थः । किञ्च, प्रयत्नरूपेऽपि तदेव सिद्ध्येन्नत्वन्यत् । निःसाधनत्वेन शरणागतौ तत्कृपया सर्वं युगपदेव सिद्ध्येदित्यपि ज्ञापितम् । अनेन सर्वसिद्ध्यर्थमाश्रय एव कर्तव्यो नान्यत् किञ्चिदिति निश्चितम् । एतदेवोक्तं कृष्णाश्रये 'विवेकधैर्यभक्त्यादिरहितस्ये'ति । एवं धैर्यलक्षणमुक्त्वोपसंहरन्ति एतदिति । अत्र भक्तिमार्गे पूर्वोक्तप्रकारेणोक्तं मद्वचनस्वरूपमेवम् । अतः परमाश्रयो निरूप्यते ।

## आश्रयोतो निरूप्यते ॥ ९ ॥

## ऐहिके पारलोके च सर्वथा शरणं हरिः ।

निनरां विशेषेण रूप्यते स्वरूपतः कथ्यत इत्यर्थः । यद्वा, यत एतद्विवेकादिकं सर्वमाश्रयं विना मशक्यमत आश्रयो निरूप्यते । यस्मिन्कृते सर्वं भवतीति प्रथमं समुदायेनाश्रयस्वरूपमाहुरैहिक इति । भक्तिमार्गाङ्गीकृतस्य सेवायां प्रवृत्तस्य प्रभुसेवाव्यतिरिक्तकर्मकरणस्यास्वधर्मत्वेनैवैहिकपारलौकिकसाधनकरणाभावात् सेवायामप्यन्तरायबाहुल्येन तथात्वाभावाच्च तदुभयमपि कथं सेत्स्यतीति तत्सिद्ध्यर्थं शरणमेव सर्वात्मना भावनीयं न तु सेवां विहाय किञ्चित्साधनान्तरं कार्यम् । शरणगतौ प्रभुः स्वयमेव सम्पादयिष्यति । यतो हरिः सर्वदुःखहर्ता, स्वकीयानां निरुपधिभगवत्सम्बन्ध्यपेक्षिताभावजनितदुःखं हरिष्यत्येवेति भावः ।

एवं समुदायेनाश्रयमुक्त्वा तत्रापि प्रत्येकभेदेन विशेषत आश्रयस्वरूपमाहुर्दुःखहानाविति ।

## दुःखहानौ तथा पापे भये कामार्थपूरणे ॥ १० ॥
## भक्तद्रोहे भक्त्यभावे भक्तैश्चातिक्रमे कृते ।
## अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः ॥ ११ ॥

भक्तिमार्गीयस्य सेवायां प्रवृत्तस्य पूर्वोक्तदेहेन्द्रियादिसम्बन्धरूपाधिभौतिकादिदुःखहानौ धैर्येण तत्कृतचित्तोद्वेगाद्यभावार्थं शरणमेव भावनीयं, तेनैव सर्वं सेत्स्यतीति प्रत्येकं तत्तत्कार्ये भावनीयमित्यर्थः । तथा पापे पापनिवारणे पूर्वसामयिके प्रमादाज्जायमाने च, सेवायां भगवद्विषयके देहेन्द्रियादिभगवदपराधादिरूपे च तदेवोक्तं "अहं त्वां सर्वपापेभ्य" इति । न तु तदर्थं प्रायश्चित्तादिकं कर्तव्यं, तत्करणे शरणधर्मो गच्छेदित्यर्थः । तथा भये राजचौरादिजनिते, पापादिविषये प्रभ्वपराधविषये च आधिभौतिकादित्रयं सर्वत्र ज्ञेयम् । कामार्थपूरणे इति । कामनाभिप्रायाणां येषां पदार्थानां, ऐहिका भगवत्सम्बन्धिनश्च । तत्राप्यैहिकं द्विविधं, दैहिकमैन्द्रियकञ्च, तत्पूरणे च, तत्रापि विशेषमाहुर्भक्तद्रोहे इति । प्रमादतो जीवस्वभाववशाद्भक्तस्य द्रोहे जातश्चेत् सोपरायः

केनापि दूरीकर्त्तुं न शक्यते मर्यादायामपि, किं पुनः पुष्टिमार्गे । यथा दुर्वाससोऽम्बरीषविषये तपास्यापि । तथा सम्भवे शरणमेव भावनीयं नतत्वन्यत् । भक्त्यभावे सेवायां महत्त्वस्यापि स्वस्ये खेदो न जायते, तदर्थं भक्तैश्च स्वस्यातिक्रमे कृते सति, नहि भगवदीयानामयं स्वभावो यन्निमित्तं विना यस्य कस्याप्यतिक्रमं कुर्वन्ति । तत्करणे तु स्वदोषमेव विचार्य शरणं भावनीयं तद्दोषनिवृत्त्यर्थम् । किञ्च, अशक्ये चेति । स्वस्य कर्तुमशक्ये कार्ये शरणं भावनीयम् । अशक्य इत्युक्ते शक्यत्वे स्वयमेव कार्यमिति न ज्ञेयं, तत्राहुः सुशक्य इति । सर्वथा शरणं हरिः । स्वस्य सुकरं शक्यमपि, तथापि शरणमेव भावनीयं, प्रभुस्मरणेनैवेदं सिद्धं नान्यथेति । प्रभोर्विपातकरणे स्वस्य सामर्थ्याभावात्स्वकृतेनाभिमानाच्छरणधर्मोऽपि गच्छेदिति सर्वात्मना तदीयत्वानुसन्धानेन शरणमेव भावनीयम् । यतः प्रभुः हरिः सर्वदुःखहर्ता अशक्यादिदुःखं हरिष्यत्येवेत्यर्थः । अथवा, अशक्ये भगवत्सम्बन्धिनि साधनासाध्ये, सुशक्ये साधनसाध्ये लौकिकेऽपि तदेव भावनीयं, न तु स्वप्रयत्नः कर्त्तव्यः, तत्करणे शरणधर्मो नश्येदिति ॥ ११ ॥

अहङ्कारकृते चैव पोष्यपोषणरक्षणे ।
पोष्यातिक्रमणे चैव तथान्तेवास्यतिक्रमे ॥ १२ ॥

किञ्च, अहङ्कारकृते चैव जीवस्वभाववशात्केनापि उदासीनेन भक्तेन च सहाहङ्कारः कृतस्तदा तेनासुरावेशो भवत्येवेति, पश्चाद्विवेके जाते पश्चात्तापो जायते मयाऽसमीचीनं कृतमिति, तद्दोषपरिहारार्थं शरणमेव भावनीयम् । यद्वा, प्रभुकृपाभरेण मौढ्या प्रभुणा सहैवाहङ्कारः कृतस्तदापि दोषपरिहारार्थं तदेव भावनीयम् । किञ्च, पोष्याणां पोषणं रक्षणं च, तत्करणेऽपि तदेव भावनीयं, न तु प्रयत्नः कार्यः । पोष्यातिक्रमणे चैव । पोष्यादीनां भार्यादीनां चकाराद्न्येषां बन्धुदासपर्यन्तानामप्यतिक्रमे, तथान्तेवासी स्वशिष्यस्तत्कृतेऽप्यतिक्रमे शरणमेव भावनीयं, न तु क्रोधादिकम्, तत्करणे आसुरावेशसम्भवात् । किञ्च, तदुपरि स्वस्य क्रोधकरणे शिष्यस्यानिष्टं भवेत् इति सुकृतिना नायं स्वभावो यदहीकृतं त्यजन्तीति । तस्य दण्डादिकं प्रभुरेव करिष्यतीति तत्राभिमानेन न स्वधर्महानिः कार्येति भावः ॥ १२ ॥

ननु प्राकृतानां चित्तादीनामप्यासनिरचिरतिकठिना, तदभावे सर्वमेव कठिनमिति चेत्तत्राहुरलौकिकेति ।

अलौकिकमनःसिद्धौ सर्वार्थे शरणं हरिः ।
एवं चित्ते सदा भाव्यं वाचा च परिकीर्तयेत् ॥ १३ ॥

मन इत्युपलक्षणम् । किन्तु सर्वेषां देहेन्द्रियादीनां प्राकृतांशनिवृत्त्या यथा अलौकिकत्वं भवति तत्सिद्धौ तदनन्तरं सर्वार्थेऽलौकिकमन्यत्सर्वमप्यपर्यमपि हरिरेव

शरणं भावनीयो नान्यत्, तदेवाहुरेवमिति । एवं प्रकारेण चित्ते ज्ञानरूपे, न तु जडे, सदा निरन्तरं भावना कार्या । अथ च वाचापि परितः कीर्त्तयेन्निरन्तरं मुखेन कथयेदित्यर्थः । क्षणमात्रास्मरणे वदैवासुरभावप्रवेशः इत्यादिष्वुक्तं सदेति । चित्तस्य ज्ञानरूपस्याभावेऽपि कीर्त्तनस्यावश्यकमिति कीर्त्तनमुक्तम् । एतदेवोक्तं नवरत्ने 'तस्मात्सर्वात्मने'त्यत्रा'न्तःकरणे तथाभावेऽन्यथाभावे वा वदनमावश्यकमि'ति । यद्वा, चकारात् कायेन सेवापि कर्त्तव्या, मनसा भावना, वाचा कीर्तनमिति त्रिविधापि प्रपत्तिर्निरूपिता । एवं सति सर्वमेव पूर्वोक्तं शक्यं भविष्यतीति भावः ॥ १३ ॥

नन्वेवमपि सति महत्यशक्य एवार्थे हरिः शरणं भावनीयः स्वशक्यार्थे भगवति भारः किमर्थं देय इति तदर्थं देवान्तरभजनं चेत् कुर्यात्तत्राहुरन्यस्येति ।

अन्यस्य भजनं तत्र स्वतो गमनमेव च ।
प्रार्थनाः कार्यमात्रेऽपि तथान्यत्र विवर्जयेत् ॥ १४ ॥

अन्यस्य देवान्तरस्य भजनं स्वतस्तदर्थं गमनमपि वर्जयेन्न कुर्यात् । चकारादन्यप्रेरणयापि तत्र न गच्छेत् । यदि न वर्जयेत्तदा शरणशब्दार्थो गच्छेदित्यर्थः । इदमेवोक्तं 'न्यासादेशेषु'इत्यत्र 'मद्धितरभजनापेक्षणमि'ति । ननु प्रभौ प्रार्थनाया अनुचितत्वात् कदाचित्तदार्यापेक्षायां देवान्तरादौ प्रार्थना मात्रं कुर्यान्न तु भजनगमनादिकं तत्राहुः प्रार्थना इति । यथा अन्यस्य भजनगमनादिकं न कुर्यात्तथा कार्यमात्रे महति स्वल्पेऽपि वा प्रार्थना अपि विवर्जयेत् । विशेषेण सर्वथा न कुर्यात्, कापि प्रार्थना न कार्येति बहुवचनमुक्तम् । * अत्र केचन पूर्वपक्षं कुर्वन्ति, प्रार्थनारहिता न केऽपीति, यतो लौकिकं पारमार्थिकं वा सर्वेषां प्रार्थनीयमस्ति । परमविरक्ता अपि पारमार्थिकं प्रार्थयन्त्येव । केचन मुक्त्यादिकमपि न वाञ्छन्ति, तथापि भगवच्चरणारविन्दानुरागरूपां भक्तिं प्रार्थयन्त्येव । ते तु तादृग्भक्त्युदयानन्तरं किमपि न प्रार्थयन्तीति चेत्तादृशयत्नं परमप्रेमासक्तिव्यसनवन्तो व्रजवासिनस्ते तु स्थले स्थले प्रार्थितवन्तः । अन्ये तु मुक्त्यादिकं प्रार्थयन्ति । व्रजवासिनां तु दानलीलादृष्ट्यादिभिन्नितलौकिकप्रार्थना विद्यत इति तद्रहितभक्तजनाभावात् प्रार्थनानिषेधः कथं क्रियते ? तत्रोच्यते । रे दुर्विदग्ध ! सन्दिग्धमनसैव विदग्धंमन्योऽसि, यतो यद्ब्रह्मादीनां मनसाप्याकलयितुं न शक्यं तत्स्वरूपे ये शुद्धिमन्तः प्रेमासक्तिव्यसनिनः येषां तद्व्यतिरिक्तं लौकिकं पारमार्थिकं वा न किञ्चनास्ति । तेषां लौकिकनिषिद्धप्रार्थनादिकं ब्रवीषि । यद्वै वदसि धार्ष्ट्यैरुक्तं, तत्रोच्यते । एतत्स्वरूपानभिज्ञ ! स्वरूपनिष्ठः सन् शृणु । येषां तदन्तराये त्रुटिर्युगायते तेषां तदन्तरायस्यासहिष्णुत्वात्

* अत्र पूर्वपक्षोत्तरे सम्प्रदायस्थप्राचीनेषु लिखितपुस्तकेषु न स्तः । अर्वाचीनपुस्तकद्वये वर्तेते । अतः केनाप्याधुनिकेन विदुषा क्षिप्ते ते स्याताम् ।

स्वानिष्टे सम्भवे संभवतीति प्रार्थनं व्यसनस्वभावेन न तु स्वानिष्टं भवतीति कुतो लौकिकनिमित्तप्रार्थनसम्भावनापि । यद्यपि तादृशानां मध्ये अनिष्टं न सम्भवति, तथापि तत्र क्रीडारसावेशेन यत्किञ्चिदपि प्रभौ स्वसाम्याधिक्यज्ञाने तन्निरोधार्थं प्रभुणैव क्रियत इति ज्ञेयम् । अन्यथा तन्निरोधो विशेषरसानुभवश्च न भवेत् । एतदेव दावानलप्रस्तावे गोपेषु भगवति लौकिकभानेन स्वसाम्येनैव क्रीडासक्तेषु, गोषु च तृणलोभेन भगवन्तं विस्मृत्य वनगह्वरं प्रविष्टासु मपचिहीनैः सह भगवत्क्रीडा न भवतीति तन्निरोधार्थं प्रभुणैव वनाग्निरुत्थापितः । अन्यथा तादृशप्रभुक्रीडायां विघ्नकरणे कः समर्थः । अत एव तत्प्रपत्त्यनन्तरमेव तस्य या शान्तिः कृता सापि प्रभुणैव कृता न तु साधनैः । तत्रैवम् स्वीयत्वं ज्ञापनाय, इतरप्रकारे स्वीयत्वाभावात् । अग्रे तैरपि तथैव विज्ञापितम् तद्यथा, 'नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुं, वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः' इति । अस्यार्थस्तु ये केवलं त्वद्बान्धवा एव तेपि नावसीदन्ति, किं पुनः प्रपन्ना इति । स्वप्रपत्तिं ज्ञापयन्ति वयमिति । अत्रायं गूढाभिसन्धिः । केवलं बन्धुत्वेन तत्स्वभावात् कदाचित् स्वसाम्येनापि प्रभुणा सह क्रीडादिकं संभवति, एवमिदं तत्प्रपन्नानामनिष्टकारकं तदस्माकं पूर्वं जातमिति स्वापराधनिवेदनं, तथापि सा क्रीडास्माकं त्वां विना न भवति, किन्तु, त्वया सहैव, त्वद्व्यतिरेकेण जीवनमेव न भवेदिति विशेषणद्वयेन द्योत्यते । अतः सर्वात्मना प्रपन्नानां नो वनाग्निभयं न भवति, किं तर्हि, पूर्वोक्तापराधेन मदनिष्टे सति स्वस्वरूपान्तरायस्तु ततोप्यभूद् इति प्रार्थनमिव कुर्वन्तः स्वापराधं प्रपत्तिं च ज्ञापयन्ति । अत एव पूर्वश्लोके सर्वथा प्रार्थनाया अनौचित्यमित्यभिप्रायेणैव त्रातुमर्हथेत्युक्तं, न तु "त्राही"ति । पूर्वमपि कालियह्रदस्नानानन्तरं दावानलोद्गमे 'न शक्नुमस्त्वच्चरणं सन्त्यक्तुमकुतोभयमि'त्येवोक्तम् । दाहस्तु सोढुं शक्यो न तु चरणवियोग इति विवरणे विवृतं, न हि व्यसनव्यतिरेकेणैवं वचनं सम्भवतीतिभावः । ननु पूर्वमेवं कथमेतादृशी प्रपत्तिर्न कृता तत्राहुः 'सर्वधर्मज्ञे'ति । सर्वं धर्मं त्वमेव जानासि, वयं तु मूढा अतोस्माकं तदुपदेशाभावेन तदज्ञानात् क्रीडारसावेशेन स्वप्रतिपत्तिविस्मृतिर्भवतीत्यर्थः । इदानीं प्रमेयबलादेव तज्ज्ञानं जातमिति सर्वथा प्रपन्नानामस्माकं त्वत्स्वरूपान्तरायो मा भवत्विति स्वरूपाशक्तिस्वभावेनैव प्रार्थनमिव कुर्वन्तः स्वशरणगतिरेव ज्ञापितेति सर्वमनवद्यम् । नन्वेतावदपि प्रार्थितमिति चेदत्रोच्यते । रे कुतर्काभिनिविष्टमते! शृणु । श्रीगोकुलं तु केवलं तदेकपरं, तेषां भावोपि तादृश एवेति तादृशस्य तस्य प्रभुरपि स्वयं तदेकपर एवेत्युभयोः परस्परैकपरत्वमेव लोके ज्ञापयितुं तन्निष्पन्नत्वेन प्रभुणैव तथा प्रेरितं यथा तैः प्रार्थितं, तदनन्तरं सदैव स्वयमेव साक्षात्तन्निवृत्तिं न कृतवानिति न तत्फलप्रार्थनेतिनिर्णयः । प्रकृतेपि प्रपत्त्यभावे कुतोऽपि प्रार्थने तन्न करोतीति स्वस्य तादृशं प्रति तत्परत्वाधान एव ज्ञाप्यत इति भावः । प्रार्थनादिनिषेधस्तु साधनदशायां न तु फलानुभवे । तथा च, श्रीगोकुलं तु फलरूपं फलोपयोगिसर्वरसात्मकं

भगवता स्वलीलार्थं स्वस्वरूपेणैव साक्षात्प्रकटीकृतम् । सा लीला बहिर्लौकानुसारिणी, अन्तस्त्वलौकिकी, बहुप्रयोजनगर्भितेति यथा यथा तत्तद्रसात्मिकास्तादृशा लीला भवेयुः, ततः स्वमाहात्म्यगुणादिकं सर्वजनीनं च भवेत्तथा तथा भगवानेव सर्वं करोति, न तु तेषां तत्स्वरूपव्यसनवतां तदन्यत्किञ्चिदपेक्षितम् । अत एव द्विजपत्न्यनुग्रहं कर्तुं पनसैव तादृशानां क्षुधामुत्पादितवान् । अन्यथाऽऽकस्मिकी तादृशी दुःसहा सा कथमुत्पन्नेव । एवं सति श्रीगोकुले तत्तन्निरोधार्थं सर्वं भगवानेव करोतीति न किञ्चित्पूर्वपक्षावसरः । किञ्च, तेषां स्वरूपापेक्षापि आसक्तिव्यसनस्वभावत एव न तु कृत्रिमा । तादृशी चेद् प्राप्तौ शाम्येत । इयं तु तत्प्राप्तावपि उत्तरोत्तरं वर्द्धत इत्येतस्याः सर्वतो भिन्नैव रीतिर्नान्यमार्गीयपूर्वपक्षादिना खण्डयितुं योग्येति दिक् । किञ्च, प्रार्थनं तु यावन्मनोरथं भवति, प्रकृते मनोरथान्तमानन्दं दत्तवान् इति प्रार्थनानपेक्ष एव सर्वं करोतीति विषयं प्रार्थनं भवेद् । यत्र दृश्यते तत्र हेतुः पूर्वमुक्त एवेति सर्वं सुस्थम् । एवं सति श्रीगोकुलस्वरूपस्थीलाद्भुतानायज्ञानात् तत्प्रार्थनावलोकनेन तदितरस्यापि प्रार्थना कर्तव्येतिपक्षो निरस्तः ।

प्रस्तुतमाहुः । ननु सर्वेषां देवानां धर्माणां च त्यागेन केवलं भगवच्छरणगमनेऽपि को वेद भगवानपेक्षितं दास्यति वा न वेति चेच्चेत्तदुरविश्वास इति ।

**अविश्वासो न कर्तव्यः सर्वथा बाधकस्तु सः ।**
**ब्रह्मास्त्रचातकौ भाव्यौ प्राप्तं सेवेत निर्ममः ॥ १५ ॥**

अस्मिन् शरणगमनेऽविश्वासो न कार्यः, यः सर्वथा बाधकः । बाधकान्तरापेक्षयाऽयमधिकबाधक इति सर्वथेत्युक्तम् । यतोऽविश्वासेन धर्मान्तरसम्बन्धे शरणधर्मो गच्छेद्, इदमेवोक्तम् 'अन्यसंमेलने वा ब्रह्मास्त्रस्याव वक्तं' इति तेन विश्वास एव कर्तव्य इतिभावः । अतः परं विश्वासे फलं अवन्यविश्वासे नेत्यत्र दृष्टान्तं निरूपयन्ति ब्रह्मास्त्रेति । अविश्वासे ब्रह्मास्त्रं भाव्यं भावनीयमित्यर्थः । यथा हनुमद्विषये बद्धमपि तेषामविश्वासेन धर्मान्तरसम्बन्धे तनो निर्गम्यमानाय यथात्राप्यविश्वासेन धर्मान्तरसम्बन्धे शरणमन्त्रो यास्यति शरणधर्मो न स्थास्यति स न कर्तव्य इतिभावः । विश्वासे चातको भाव्यः । स्वातिजलविश्वासेन चैत्य तिष्ठति यदा मेघो वर्षत्येव, स च पिबतीतिभावनया विश्वास एव कर्तव्यो नत्वविश्वासः । शरणगतौ विश्वासे भगवान् सर्वं करिष्यतीतिभावः । एवं विश्वासेन शरणस्थितौ भगवदिच्छया प्रयत्नं विना यदेव प्राप्तं भवेदनायासेन स्वल्पमपि तदेव प्राप्य, तत्रापि निर्ममः भगवदीयत्वाभावात् ममतारहितः सन् प्रभुसेवां कुर्यान्न तु स्वीयार्थं यत्नं कुर्यादित्याहुः प्राप्तमिति । निर्मम इतिपदेन तत्सर्वं भगवद्रूपमुक्तमेव कुर्यान्न तु स्वार्थमिति सूचितम् ॥ १५ ॥

ननु धर्मान्तरसम्बन्धे शरणशब्दार्थो भवत्वन्यादृशप्रकारेणौकिकवैदिककर्मणामपि त्यागे कदाचिदप्रामाण्यशङ्का स्यान्मार्गे, तदभावार्थं तत्करणप्रकारमाहुरुपायकथनं विदिति ।

यथाकथञ्चित्कार्याणि कुर्यादुच्चावचान्यपि ।
किं वा प्रोक्तेन बहुना शरणं भावयेद्धरिम् ॥ १६ ॥
एवमाश्रयणं प्रोक्तं सर्वेषां सर्वदा हितम् ।

यथाकथमपि मार्गे लोकानामप्रामाण्यशङ्का न भवेत्तथोच्चावचान्यावश्यकलौकिकवैदिकसम्बन्धीनि कार्याणि मार्गप्रामाण्यार्थं प्रभोराज्ञां ज्ञात्वा तानि कार्याणि, न तु स्वधर्मत्वेनेति । यथा "करिष्ये वचनं तवे"ति पार्थेन भगवदाज्ञा कृता तथेत्यर्थः । एवं सति शरणपदार्थो न गच्छेत् । इति पूर्वोक्ता शङ्का निरस्ता । तदेवोक्तं, पुष्टिप्रवाहमर्यादायां "लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नान्यथे"ति । अथवा, तदर्थमपि कर्माकरणे न दोषः, शरणपदार्थस्यैव तावद्रूपत्वात्तदाहुः किं वेति । बहुना प्रोक्तेन किम्, न किञ्चित्सिद्ध्यति, किन्तु सर्वत्र शरणमेव भावनीयं न तु लोकसङ्ग्रहार्थमपि कर्मकरणम् । तदर्थमपि विधित्वेन कर्मकरणे शरणपदार्थाभाव इति भावः । एतदेवोक्तं 'धर्मसम्मेलनं' चेत्यत्र । एवं सति प्रभोराज्ञां मत्वा कर्मकरणमावश्यकं नान्यथेत्यर्थः । ननु एवं सर्वात्मना हानेन कदाचित्पापं सम्भवेत्तत्राहुर्हरिरिति । स हरिः सर्वदुःखहर्ता तत्सम्भावनायां स एव पापादिकं दूरीकरिष्यतीति भावः । एतत्सर्वं 'सर्वधर्मान्' इत्यस्य निरूपणे व्यासादेशेऽत्र द्रष्टव्यम् । अतः परमुपसंहरन्ति एवमिति । एवं प्रकारेणाश्रयणमाश्रयस्वरूपं प्रकर्षेण साङ्गमुक्तम् । तावता किमिति चेत्तत्राहुः सर्वेषामिति । सर्वेषां जीवानामाश्रयणा वर्णानां सर्वदा क्रियमाणं सत् हितं हितकारि, साधनं विनाप्यैहिकपारलौकिकसम्पत्तिसाधकमित्यतः परं किमवशिष्यते ।

ननु सर्वयुगेषु साधनैरेव फलं भवतीत्यधुना तानि विहाय केवलं शरणमेव कथमुच्यते, तत्राहुः कलाविति ।

कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः ॥ १७ ॥

श्रीमद्वल्लभाचार्यचरणविरचितो विवेकधैर्याश्रयग्रन्थः सम्पूर्णः ।

---

अन्ययुगेषु धर्मस्यैव प्राधान्याद्धिंसादीनां साधनसाध्यत्वात् तैरेव विहितभक्त्युपासनाकर्मादीनां फलं भवति । कलौ तु पापप्रधान इति साधनानामसम्पत्तेः हिंसामत्स्यादिमार्गा दुःसाध्याः, प्रत्युत यत् किञ्चित्करणेऽपि पापस्पर्शेन पापमपि जायत इति सर्वथा दुःसाध्याः, यतो यत्र साधनसाध्या अपि भक्त्यादिमार्गाः कलौ दुःसाध्यास्तत्र कृतादियुगेष्वपि यो भक्तिमार्गः साधनासाध्यः केवलभगवदनुग्रहैकलभ्यस्तस्य कलौ सुतरामेव साधनासाध्यत्वेन दुःसाध्यत्वमिति सर्वात्मना शरण-

यतो भगवान् तादृशे भक्तिमार्गेऽप्यनुग्रहं करिष्यतीति, सर्वात्मना शरणमेव भावनीयं, नान्यत्कर्तव्यमिति स्वसिद्धान्तज्ञापनायोक्तं मे मतिरिति। मे मतिरियेव। तेन स्वमार्गीयाणामिदमेव कर्तव्यं नान्यदितिभावः।

श्रीमदाचार्यचरणशरणस्मरणेन मे।
इयायाता प्रणालीयं ग्रन्थस्याश्वानुसारिणी ॥ १ ॥
भक्तिमार्गे स्वकीयस्य दार्ढ्यार्थं सर्वथा इमे।
अपेक्षिता विवेकाद्यास्तेनदर्थं तदाश्रयः ॥ २ ॥
श्रीमदाचार्यचरणैरिति ते वर्णिताः स्फुटम्।
अतस्त एव चरणास्तदर्थं शरणं मम ॥ ३ ॥

॥ इति श्रीघनश्यामात्मजश्रीगोपीशचरणविरचिता
विवेकधैर्याश्रयविवृतिः
सम्पूर्णा ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

श्रीभागवतप्रतिपदमणिवरभावांशुभूषितश्रीवल्लभाचार्यचरणविरचितः ।

# विवेकधैर्याश्रयः ।

## श्रीगोविन्दरायात्मजश्रीगोकुलोत्सवविरचिता विवृतिः ।

यत्पादाम्बुजाश्रयादासन् सर्वे पूर्णमनोरथाः ।
तमेव गोकुलाधीशं सर्वसिद्ध्यै समाश्रये ॥ १ ॥

अथ सकलकर्मादिमार्गाधिकारेषु सत्सु भक्तिमार्गानुसारेण भगवदाश्रय एव सर्वपुरुषार्थसाधकस्तदाश्रये च विवेकधैर्ये हेतू । तथाहि । विवेके सति सर्वोत्तमत्वं भगवति ज्ञात्वा तदाश्रयं करोति जीवः । धैर्ये च सति दार्ढ्यं भवति, तेन विवेकधैर्याभ्यामविरतं भगवदाश्रयो भवति तत्र स्वीयानां भक्तिसिद्ध्यर्थं विवेकधैर्याश्रयान् आचार्या निरूपयन्ति विवेकधैर्ये इति ।

विवेकधैर्ये सततं रक्षणीये तथाश्रयः ।
विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यति ॥ १ ॥

विवेकधैर्ये निरन्तरं रक्षणीये । आश्रयो भगवदाश्रयः सोपि तथा निरन्तरं रक्षणीय इत्यर्थः । एतेषां रक्षणञ्चैतदनुसन्धानपूर्वकमेव तदनुकूलकृतिकरणम् । मुख्यो भगवदाश्रयः । तदङ्गे च विवेकधैर्ये इति ज्ञापनाय विवेकधैर्ययोरेकपदेन निरूपणम् । आश्रयनिरूपणं चान्येन । तत्र विवेकस्य प्रथमोद्दिष्टत्वात्प्रथमं विवेकं लक्षयन्ति विवेकस्त्विति । विवेकस्त्वयमेव, नत्वन्य इत्यन्ययोगव्यवच्छेदार्थस्तुशब्दः । विवेकस्वरूपमाहुर्हरिरिति । हरिः सर्वदुःखहर्ता, तेन यत्करिष्यति तद्रूपमेव करिष्यतीति भावः । तदपि कियत्कार्यं कृत्वा निवर्तिष्यत इति नाशङ्क्याहुः सर्वमिति । निजेच्छातः स्वेच्छातः । तथा च न प्रार्थनीय इत्यर्थः । अत एव प्रह्लादवचने, 'नान्यथा तेऽखिलगुरोर्घटेत करुणात्मनः' । 'यस्तु आशिष आशास्ते न स भृत्यः स वै वणिक्,' अत एव

'नकारमतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीयाः, येऽन्योन्यतो भागवत-प्रधानाः सभाजयन्ते मम पौरुषाणी'त्यादिवाक्यानि ॥ १ ॥

ननु सेवकैः प्रभुः प्रार्थनीय एवेति चेत्तत्राहुः प्रार्थिते वेति ।

पार्थितेपि ततः किं स्यात् स्वाम्यभिप्रायसंशयात् ।
सर्वत्र तस्य सर्वं हि सर्वसामर्थ्यमेव च ॥ २ ॥

प्रार्थितेपि ततः प्रार्थनात् किं स्यान्न किमपीत्यर्थः । तत्र हेतुः स्वाम्यभिप्रा-येति । यतः प्रभोरभिप्रायः पूर्वं ज्ञातुमशक्यः, प्रभुश्च स्वाभिप्रेतमेव करिष्यति । लौकिका अपीश्वराः स्वतन्त्रा भवन्ति किं पुनः सकललोकमहेश्वरः । ननु निजेच्छानन्तरं करि-ष्यति यदि सामग्री सद्घटिता स्यात् । नह्यसम्भृतसामग्रीकः किमपि कर्तुं शक्नोतीति चेत्तत्राहुः सर्वत्रेति । तस्य भगवतः सर्वत्र सर्वस्मिन्नेवोपयोग्येपि देशे सर्वयोनिषु च सर्वं वस्तु सिद्धमेवास्ति, अप्रतिहतेच्छत्वात् । अत एव किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्यादि । ननु सम्भृतसामग्रीकोपि यदि स्वयमसमर्थः स्यात् तदा कथं कुर्या-दित्यत्राहुः सर्वेति । 'यः सर्वज्ञः सर्वशक्तिरि'तिश्रुतेः । सर्वप्रकारकं सामर्थ्यं विद्यत इति साधनन्यूनत्वे साधनमपि सम्भाव्य फलं दातुं समर्थः । साधनं विनापि फलं दातुं समर्थ इत्यर्थः । अत एव व्रजवासिभ्यो निःसाधनेभ्य एव फलं दत्तवान् । 'तेनाधीतश्रुति-गणा नोपासितमहत्तमाः । अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः । केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'त्यादिवाक्यात् । अत एव निर्द्धारक एवकारः । चकारादिच्छापि । नहीच्छां विना कोपि किमपि करोति ॥ २ ॥

भगवद्धर्मान् विविच्य जीवधर्मान् विवेचयन्त्यभिमानश्चेति ।

अभिमानश्च सन्त्याज्यः स्वाम्यधीनत्वभावनात् ।
विशेषतश्चेदाज्ञा स्यादन्तःकरणगोचरः ॥ ३ ॥

सेवकैः सर्वदा स्वाम्यधीनत्वमेव मनसि भावनीयं दासधर्मत्वात् । ल्यब्लोपे पञ्चमी । तथा च स्वाम्यधीनत्वभावनं प्राप्य अभिमानः सर्वथा सम्यक् त्याज्यः । सर्वात्मनस्त्याज्य इत्युपसर्गः । अथवा, लौकिकस्त्याज्यो नत्वलौकिक इति विवेकार्थ-मुपसर्गः । चकारादन्येपि कामक्रोधादयः । ननु भगवदीयानां लौकिकं वैदिकं वा यदि विशेषतः कार्यं कर्तव्यं स्यात् तदा केन प्रकारेण कर्तव्यमिति चेत्तत्राहुर्विशेषतश्चेदिति । यदि विशेषतो भगवदाज्ञा स्यात्, तदा विशेषः प्रकारः सर्वोपि कर्तव्यः । ननु

१ उक्तानिरूपण आवश्यक २ "अनार्याेति" इति पाठः ग पु.

भगवदाज्ञां विना । साप्यन्तःकरणपूर्विका न तु क्रोधेन परिहासेन वा, तदाहुरन्तःकरणगोचर इति । अजहल्लिङ्गमिदं पदम् । तेन लौकिके आवश्यके व्यवहारे नाज्ञापेक्षा, वैदिकेऽपि नित्यकर्मणि वेदरूपसामान्याज्ञयैव तत्करणम् । तस्माद्भगवदीयानां लौकिके वैदिके च विशेषकार्ये कर्तव्ये भगवदाज्ञापेक्षा ।

**तदा विशेषगत्यादि भाव्यं भिन्नं तु दैहिकात् ।**
**आपद्गत्यादिकार्येषु हठस्त्याज्यश्च सर्वथा ॥ ४ ॥**

अत एव राजसूयोद्यतेन धर्मराजेन विज्ञापितं 'यज्ञे विभूतीर्भवत' इति । लौकिकेऽपि यावदावश्यकं तावदेव कर्तव्यमधिकन्तु भगवदाज्ञातः । गतिर्गमनम्, तेन विशेषगतिस्तीर्थादियात्रा । आदिपदादन्यदप्यागन्तुकम् । तथा च, यत्किञ्चिदप्यागन्तुकं कार्यं, तत्र भगवदाज्ञापेक्षा । तत्पत्त्यर्थस्य* भूधातोर्ण्यै, तस्य भाव्यमुत्पाद्यतीत्यर्थः । तथा च भाव्यते क्रियत इति भाव्यं कर्तव्यमित्यर्थः । ननु पुत्रादीनामुपनयनविवाहादावाज्ञामपेक्षेत न वेत्याशङ्क्य, नेत्याहुर्भिन्नन्तु दैहिकादिति, दैहिकाद्भिन्नं विशेषकार्यमाज्ञया कर्तव्यं नतु दैहिकमित्यर्थः । तु शब्दः सन्देहवारकः, तेन पुत्रादीनामुपनयनविवाहादिकरणे नाज्ञापेक्षा, किन्तु निर्वाहमात्रं कर्तव्यं । न त्वधिको वृथा व्ययादिः कर्तव्यः । ननु विपदादौ कथं व्यवहर्तव्यमिति चेत्तत्राहुरापद्गत्यादीति । आपद्गतिरापत्प्राप्तिस्तत्र यानि कार्याणि तेषु हठो न कार्यः, किन्तु यथा सौकर्यमेव विधेयम् । आदिपदाद्भगवदाज्ञा, आचार्याज्ञा, भगवदीयानामाग्रहः । तेष्वपि स्वकीयो हठो न कार्यः । ननु विपदादौ हठेऽपि का क्षतिः, भगवतैव तद्धठनिर्वाहात् । न हि भगवान्कदाचिदपि स्वकीयानुपेक्षते, 'ये यथा मां प्रपद्यन्त' इति भगवत्प्रतिज्ञानादिति चेत्, सत्यम् । परन्त्वन्यथैव कार्यसम्भवे प्रभौ सङ्कोचदानस्यानुचितत्वात् । हठविषयस्य भगवदनभिमेतत्वे निर्वाहाभावाच्च । ननूक्तमेव यथा भगवान् कदाचिदपि प्रपन्नं नोपेक्षत इति तत्कथमनिर्वाह इति चेत्, सत्यम् । यदि सर्वथा प्रपन्नः स्यात्, परन्तु भगवदनभिमेतस्य करणे प्रपत्तेरेव न्यूनत्वात् । न हि सर्वथा प्रपन्नो यः स भगवदनभिमेतं कदाचिदपि करोति । तेन सर्वथा प्रपत्त्यभावे भागवतोऽपि भवत्वस्य हठनिर्वाहः । नन्वनभिमेतत्वं तेन कथं ज्ञातव्यमज्ञाते तु न तस्य दोष इति चेत्, सत्यम् । तथापि सन्देहेऽपि हठस्यानुचितत्वादित्यलं विस्तरेण । एतत्सर्वमभिसन्धायाहुः सर्वथेति । सर्वथा सर्वैः प्रकारैः । तथा च केनापि प्रकारेण हठो न कर्तव्य इत्यर्थः ॥४॥

एवं भगवत्कृत्येषु विचार्य लौकिकेषु व्यवस्थामाहुरनाग्रहश्चेति ।

**अनाग्रहश्च सर्वत्र धर्माधर्माग्रदर्शनम् ।**
**विवेकोऽयं समाख्यातो धैर्यन्तु विनिरूप्यते ॥ ५ ॥**

* दैत्यनि च १-१-२६

सर्वत्र लौकिके व्यवहारोऽनाग्रहेण कर्त्तव्यः । किन्त्वौदासीन्येन व्यवहर्त्तव्यं, न केवलमौदासिन्यमेव कर्त्तव्यं लौकिके, किन्तु भक्तिविरोधिलौकिकांशस्य त्यागोपि कर्त्तव्य इति चकारार्थः । किञ्च, धर्माणामधर्माणां च पर्यवसानविचारेण तदनुसारेण व्यवहर्त्तव्यमित्याहुर्धर्माधर्माग्रदर्शनमिति । एके स्मार्त्तधर्मा अपरे श्रौतधर्मा अन्ये भगवद्धर्माः, ते सर्वेपि सम्प्रदायपत्तिभेदेन द्विविधाः उत्तरोत्तरबलिष्ठाः । तत्र स्वाधिकारो विचार्यः । यदि भगवदाज्ञा भवति, तदा सापि विचार्या, भगवदिच्छा च विचार्या, आचार्याज्ञा च विचार्या । तथा च धर्माधर्माणां बलाबलमेतत्सर्वं च विचार्य यथा क्रियमाणे पर्यवसाने उत्तमं भवति तथा करणीयम् । तेनैवं पदयोजनिका । धर्माणामधर्माणाञ्च यदग्रं पर्यवसानं तस्य दर्शनं विचारः कर्त्तव्य इति शेषः । उपसंहरन्ति, विवेकोयमिति । अयमेव विवेको नत्वन्य इति ज्ञापनायायमिति । सविस्तरमवान्तरभेदनिरूपणपूर्वकमिति समिति । आख्यातः कथितः । उद्देशानुसारेण धैर्यं रूपयन्ति धैर्यमिति । विवेकानन्तरं धैर्ये विलम्बो न कार्य इति ज्ञापनाय अव्यधानेन पूर्वोपसंहारोत्तरोपक्रमयोर्निरूपणम् । तुशब्दः प्रकारभेदज्ञापकः विशेषेणविस्तरप्रकारेण निरूप्यते ॥ ६ ॥

धैर्यस्वरूपमाहुस्त्रिदुःखेति ।

**त्रिदुःखसहनं धैर्यमामृतेः सर्वतः सदा ।**
**तक्रवद्देहवद्भाव्यं जडवद्गोपभार्यवत् ॥ ६ ॥**

त्रयाणामाधिभौतिकाध्यात्मिकाधिदैविकानां दुःखानां सहनम्, लौकिकायास आधिभौतिको, वैदिक आध्यात्मिको, भगवदर्थ आधिदैविकः । मरणपर्यन्तं सहनमित्याहुराम्रतेरिति । तत्रापि मध्ये मध्ये विच्छिद्य सहनं न साधकमित्याहुः सदेति निरन्तरमित्यर्थः । सर्वस्मात्सहनं न तु तत्र हीनमध्यमत्वादिकं भावनीयमित्यर्थः । अभ्यासनिष्ठचौ धैर्यं सुकरमिति देहाद्यध्यासनिवृत्तिप्रकारमाहुस्तक्रवदिति । देहवदिति, देहवत्ता सह्यानि तक्रवद्भावना कार्या । तथाहि, अत्रैवमाख्यायिका । काचिद्राज्ञी केनचित्पामरेण सम्बद्धचित्ता सती तेन सह सङ्केतं कृतवती राजानमहं मारयिष्यामि, तव भार्या भविष्यामिति । ततः कस्मिंश्चिद्दिने तं स्थापयित्वा स्वभवनमागत्य रात्रौ राजानं हत्वा तद्वनं प्रतिष्ठा । तत्र च पतित्वेन कल्पितं तं पुरुषं सर्पदष्टं दृष्टवती । तदन्तरमितस्ततो भ्रष्टा सती कुत्रचिद्देशे गणिका बभूव । तत्र चाज्ञानात् स्वपुत्रेण सम्भुक्ता । तदनन्तरं च प्रसङ्गात् ज्ञातवती ममायं पुत्र इति । तदनन्तरमत्यन्तग्लानिभाजा शरीरं त्यक्तुं चितां प्रविष्टा । तत्रापि, वह्नितापमसहमाना ततो निर्गत्य कुत्रचिद्देशे कस्यचिद्गोपस्य भार्या बभूव । तत्र च,

१ ग्येनैवेति पाठः ग घ

गोरसविक्रयेण जीविकां चकार । सा नैकदा स्वसमानाभिर्वधूभिः सह तक्रविक्रयाय निश्चक्राम । मध्येमार्गं केनचित्पथ्यूहेन पतितानि सर्वासां भाण्डानि भग्नान्यभवन् । तदान्याश्चुक्षुभुः, सा तु जहास । तदा हसन्तीं तां सर्वाः पप्रच्छुः, कथं त्वं न क्षुभ्यसि किमिति च हससीति ?। तदा सा स्ववृत्तान्तकथनेन पद्येनैकेनोत्तरमदात् । तथाहि,

हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं देशान्तरे विधिवशाद्गणिकास्मि जाता ।

पुत्रं पतिं समधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रमि"ति ॥

तद्वाद्युक्तनाट्यादिति । सप्तम्यर्थे वतिः, तेन यथा तस्याख्यके उदासीनभावमात्राभिमानः, तथा सङ्घाते भावनीयमित्यर्थः । इयमाख्यायिकाऽन्यत्र प्रसिद्धेति सुप्रसिद्धपौराणं दृष्टान्तमाहुर्जडवदिति । तृतीये जन्मनि भरतो जडस्तद्वत् यथा सङ्घाते नाभिमानस्तथा भावनीयमित्यर्थः । यथा जडः स्वबन्धुषु सङ्गं स्वतनावुदासीनोऽपि रहूगणे च सङ्गं कृतवान्, तथा श्रीमत्प्रभुचरणारविन्दानुपयुक्तेषु बन्धुष्वपि सङ्गो न कार्यः, श्रीमत्प्रभुचरणारविन्दानुरक्तेषूदासीनेष्वपि सङ्गः कार्य इति जडदृष्टान्तेन सूच्यते । अत एव कर्दमं प्रति विज्ञापयन्त्या देवहूत्या सङ्गो यः 'संसृतेर्हेतुरसत्सु विहितो धिया । स एव साधुषु कृतो निःसङ्गत्वाय कल्पते' ( भा० ३-२३-५५ ) इत्युक्तम् । अत एव कपिलदेवेनाप्युक्तम्, 'प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतमि'त्युक्तम् ( भा० ३-२५-२० ) । अत एव वृत्रेणापि प्रार्थितम्, "ममोत्तमश्लोकजनेषु सख्य"मिति ( भा० ६-११-२७ ) । यथा च भगवत्पुराणेऽपि जडे भरतस्याश्रीसम्बन्धी विघ्नो न जातस्तथा सर्वेष्वेव भगवदीयेषु देवान्तरकृतो विघ्नो न भवतीत्यपि सूच्यते । अत एव गर्भस्तुतौ, "त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकप मूर्धसु प्रभो' इति देववचनं गीयते । किं बहुना, कालोऽपि न प्रभुत्वं कर्तुमिष्टे । अत एव कपिलदेवेनोक्तम्, "[1]न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मे निमिषो लेढि हेतिरि"ति ( भा० ३-२५-३८ ) । अनिमेषो हेतिः कालः । अत एव यमेनाप्युक्तम् 'ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः । तान्नोपसीदत हरेर्गदयाभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे' इति (भा० ६-३-२७) वयः कालः । अत एव द्वितीयस्कन्धे द्वितीयाध्याये । न यत्र कालेति । (भा० २-२-१७) एवं मध्ये सुप्रसिद्धं पौराणं दृष्टान्तमुक्त्वा पूर्वोक्तगोपिकायाः सम्बन्धज्ञापनाय पुनस्तमन्यन्यिनमेव दृष्टान्तमाहुर्गोपभार्यावदिति । गोपेन भ्रियते पोष्यत इति गोपभार्या, तस्या देहस्तत्र यथा तस्या उदासीनबुद्धिस्तथा देहादौ भाव्यमित्यर्थः । ननु तत्र विषयस्योत्काभावरूपनाशरूपविषयस्यौदासीन्यं तस्या आसीदित्युक्तं, परन्तु देहादौ तस्या उदासी-

१ "[illegible]" इति पाठः ।

नभावः कथं निर्धारीति चेत्, सत्यम्, यदि देहादावासक्तिलक्षणः स्यात्तदा तक्रविक्रयेण जीवन्त्यास्तस्या देहादिपोषके तक्रे कथमौदासीन्यं स्यात्? तेन ज्ञायते तस्या उदासीनबुद्धिरेव देहादौ। ननु प्रतिकाराशक्त्या कुतोऽपि शोको व्यर्थ इति शोकं न कृतवती, नत्वनासक्तिर्देहादाविति चेन्नैवम्। प्रतीकाराशक्तिं ज्ञात्वा प्रतीकारोद्यमं मा कुर्यात्, शोकाभावस्तु दुर्निवारः। यो देहो राज्यदशायामनेकदेहपोषकः सर्वसम्पत्तिसम्पन्नः सर्वसुखसन्दोहनिधानमासीत्स एव देहः पश्चात्पामरेण गोपेन पोष्यः, सर्वसम्पत्तिशून्यः, सर्वदुःखनिधानमजनीति ज्ञापनाय गोपभार्यात्वेन निर्देशः। तथा च, यदर्थं धैर्यं त्यक्तव्यं ताः सम्पदश्चञ्चला इव चञ्चला इति। किमिति। सर्वदा स्थायिसकलपुरुषार्थमतिक्षणपोषकं मत्पादपद्मं (कथं) परित्यक्तव्यमितिभावः। तथा च देहवता तक्रवञ्चवद्गोपभार्यावत् स्वदेहादौ भाव्यमित्यर्थः पर्यवसन्नः। देहवता भाव्यमिति तृतीयासमासः। देहवता देहाभिमानवता तेन यत्किञ्चिदभिमानोऽपि संरक्ष्यः। तथा च भगवत्सेवादिविषयकः सर्वथा संरक्ष्यो, लौकिकविषयकस्त्याज्य इति भावः, यद्वा, देहवतेति मनुष्याधिकारकत्वनियमो व्यावर्तितः। तेन पश्वादिशरीरेऽप्येवं भाव्यमितिभावः। अत एव भरतस्य हरिणजन्मन्यप्यध्यासनिवृत्तिः। तदुक्तम्, तस्मिन्नपि कालं समीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कतृणपर्णवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकं क्लिन्नमुत्ससर्जेति तस्मिन्पुलहाश्रमे। अथवा। त्रिदुःखसहनमिति। भक्तिविरोधिदुःखनिवृत्त्युपायाकरणेन त्रयाणां कायिकवाचिकमानसिकानां दुःखानां देहपातपर्यन्तं सर्वेभ्यः सहनं धैर्यमित्यर्थः। स्वशरीरस्वीयवस्तुनोरासक्त्याधिक्ये दुःखाधिक्यसम्भवाद्धैर्यमशक्यं स्यादिति तादृश्यासक्तिर्न कार्येति दृष्टान्तैराहुस्तक्रवदित्यादि। जडेन तुल्यं जडवत्, तृतीयासमर्थाद्वतिः। देह इव देहवत्, सप्तमीसमर्थाद्वतिः। जडभरतेन स्वदेह इव देहेऽप्यासक्तिः कार्येत्यर्थः। गोपभार्यावद्गोपभार्यया तुल्यं, गृहे स्थितायाः स्त्रिया भरणीयत्वात्। भार्यात्वाभावाद्वस्तुत्वेन नपुंसकत्वानिर्देशः। तक्रवदिति सप्तमीसमर्थाद्वतिः। गोपभार्यया स्वतक्र इव स्ववस्तुन्यासक्तिः कार्येत्यर्थः। तेन स्वशरीरवस्तुनोर्निर्वाहार्थमासक्तिं कृत्वा जडभरतेनेव भगवत्परतया स्थेयमितिभावः।

ननु यदुक्तं त्रिदुःखसहनं धैर्यमिति तत्र यदि कदाचित् स्वत एव दुःखप्रतीकारः सिद्धस्तदापि किं तं प्रतीकारं निवार्य दुःखं सोढव्यमेवाहोस्वित्प्रतीकारेण तद् दुःखमपोह्यम्? इति सन्देहे निर्णयमाहुः प्रतीकार इति॥

प्रतीकारो यदृच्छातः सिद्धश्चेन्नाग्रही भवेत्।
भार्यादीनां तथान्येषामसतश्चाक्रमं सहेत्॥ ७॥

यदृच्छातः, अनायासेन चेद् यदि प्रतीकारः दुःखप्रतीकारः सिद्धः सम्पन्नः

स्यात्तदा आग्रही भवेदं दुःखं सोढव्यमेवेत्याग्रहवांश्च भवेत्। इदमत्राकूतम्, अत्र हि भगवदाश्रयसिद्ध्यर्थं विवेकधैर्ये उच्येते। तेन त्रिदुःखसहनरूपं यद् धैर्यं निरूपितं तदपि यदि भगवदाश्रयनिमित्तं तदा कर्त्तव्यं, नोचेत्प्रयोजनं विना किमिति तत्कर्त्तव्यं? 'न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तेत' इति न्यायात्। अत एव केनचिदुक्तम् 'अनिषिद्धसुखत्यागी पशुरेव न संशय' इति। न केवलं प्रयोजनाभावमात्रं, प्रत्युत विपरीतत्वमासुरत्वञ्च। अत एव गीतासु भगवताप्युक्तम्, 'अशास्त्रविहितं घोरं तप्यन्ते ये तपोजनाः। दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः। कर्षयन्तः शरीरस्थं भूतग्राममचेतसः। मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयानि'ति। यदृच्छात इति, स्वयं तदर्थमायासो न कर्त्तव्य इति सूचितम्। तदर्थमायासकरणे स्वसर्वस्वप्रभुचरणारविन्दविस्मरणं यतः। 'भूमिनिन्दाप्रशंसा नित्ययोगे तिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादय' इति वाक्यात्क्लिन्दायामिति मत्वर्थोऽत्र। तथा चासदाग्रहवांश्च भवेदित्यर्थः। तेनायमर्थः पर्यवसन्नः। यदि किञ्चिदपि भगवतो भगवदीयानां वा कार्यं सिद्ध्येत्, तदा स्वतः सिद्धेऽपि प्रतीकारे दुःखं सोढव्यमेव। तत्राग्रहस्यासत्त्वाभावात्। न हि येन भगवतो भक्तानां वा सेवा सिद्ध्यति, तस्य कदाचिदप्यसत्त्वं भवति। यतो नन्वनो लाभः स एव यद्भगवतो भक्तानां वा कार्यसाधनम्। इदमपि लोकस्यापरिपाकदशायामुच्यते। परिपाकदशायां यथा यथा स्वयं क्लेशं सोढ्वा भगवतो भक्तानां वा साधयति, तथा तथा परमसन्तोष एवेति दुःखमेव नास्ति किं सोढव्यम्?। अभिमानस्यैव संसारत्वादपमानजनितदुःखसहनमतिकठिनम्। तत्रापि स्वापेक्षया हीनैः कृतोपमानसुतरां सोढुमशक्यः। तत्रापि स्वस्वाधीनैः कृतस्ततः सुतरां सोढुमशक्यस्तेन तत्सहने कदाचित्कस्यचिच्छिथिलता स्यादिति "त्रिदुःखसहनमि"ति सङ्क्षेपेणोक्तमपि पुनर्विशेषत माह—भार्यादीनामिति। भार्या आदिर्येषामिति। सर्व एव बान्धवास्तेषामाक्रमं तत्कृततिरस्कारं सहेत्। आसमन्तात्क्रमः पादनिक्षेपः, शिरसि पादप्रहारपर्यन्तमपि तिरस्कारं सहेदित्यर्थः। पुत्रा अपि कदाचिद्विभागादिना स्वतन्त्रा भवन्ति। भार्या तु केवलं भर्त्रधीनैवेति तत्कृतस्तिरस्कारो भर्तुरतिदुःसहस्तादृशोऽपि सोढव्य इति ज्ञापनाय प्रथमं भार्याया निर्देशः। यथैतादृग्दुःसहोऽपि तिरस्कारः सोढव्यस्तदान्यसहने किं वक्तव्यमिति कैमुतिकन्यायोऽप्यनेन सूचितः। तथा च, प्रभुचरणनलिनयुगलसमाश्रयणाय किं न कर्त्तव्यमिति भावोऽप्यसूचि। यतो ह्याश्रयनिरूपणायैव विवेकधैर्ये निरूप्येते। यद्यप्येकस्य द्वयोर्वा सोढव्यो नास्ति, किन्तु सर्वेषामिति ज्ञापनाय बहुवचनम्। ननु "षह"मर्षणे, इति धातोरनुदात्तेत्त्वात्सहेदिति परस्मैपदं कथं सङ्गच्छत इति चेद्, इत्थम्।

---

१ "क्लन्दे" इति ग ग्रे।

"चक्षिङ् व्यक्तायां वाचो"त्यत्रेकारसत्त्वेपि ङकारग्रहणं यत् , तत् ङितामेवात्मनेपदं नित्यमनुदात्तेतान्तु अनित्यमिति ज्ञापयति । तेन अनुदात्तेतां कदाचित् परस्मैपदमपि भवति, अत एव पण्डितप्रवरेण वोपदेवेन कविकल्पद्रुमधातुपाठे अयम् उभयपदयुक्तः । अत एव महाकविना शाकल्यमल्लेनाप्यधिमत्समेतुमसहन्नुपयन्ताविफलो भवेति प्रयत्नानमशासीदिति प्रयुक्तम् । अत एवानुक्तमप्यूहति पण्डितो जनः इतिप्रयोगः । ननु उदासीनाश्चेत् केपि तिरस्कुर्युस्तदा किं करणीयम् इत्याशङ्क्य, तत्रापि यदि तदसहने आश्रये कथनान्तरायः स्यात्, तदा सोढव्यमित्याहुस्तथान्येषामिति । यथातिदुःसहोपि बन्धूनां तिरस्कारः सोढव्यस्तथोदासीनानामपि तिरस्कारः सोढव्यः इत्यर्थः । ननु नीचश्चेत् कोपि तिरस्कुर्यात् तदा किं कार्यमित्याशङ्क्य पूर्ववदेवाहुरसत इति । असतो जात्यादिहीनस्येत्यर्थः । यदि भगवत्सेवादिकं निर्वहति तदा तदर्थं म्लेच्छादीनामपि तिरस्कारः सोढव्यः इत्यर्थः । न केवलं तेषां तिरस्कारमात्रं सोढव्यं, प्रत्युत यदि तैः प्रभुसेवादिकं निर्विघ्नं निर्वहति तदा वान्यथा उदासीना म्लेच्छादयश्च त्रयोपि अनुसर्तव्या इति चकारार्थः ।

यथा भगवदर्थमतिदुःसहोपि तिरस्कारः सोढव्यः, तथा प्रभुचरणसमाश्रयणाय प्रतिबन्धरूपः सर्वोपि सुखभोगः सुदुस्त्यजोपि त्यक्तव्य इत्याहुः स्वयमिति ।

**स्वयमिन्द्रियकार्याणि कायवाङ्मनसा त्यजेत् ।**
**अशूरेणापि कर्तव्यं स्वस्यासामर्थ्यभावनात् ॥ ८ ॥**

"स्वयं"पदात् श्रीमत्प्रभुप्रसादत्वेन प्राप्तस्य विहितत्वेन प्राप्तस्य च मिष्टान्नादेः परित्यागाभावः सूचितः । अत एव "त्वयोपभुक्त"त्यादि । इन्द्रियकार्याणि सर्वेन्द्रियविषयभोगात् कायेन वाचा मनसा च स्वयं प्रयत्नेन त्यजेदित्यर्थः । अयमभिसन्धिः, "तस्मात्केनाप्युपायेन मनः कृष्णे निवेशये"दिति सप्तमे नारदवचनान्निरन्तरं भगवद्भावनादिरेव परमपुरुषार्थः । अत एव "तस्माद्भारत सर्वात्मे"त्यादि । "तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशव । म्रियमाणोह्यवहितस्ततो याति परां गतिम्" । अतस्तत्साधक एव परमलाभकरस्तद्विघातक एव परमहानिकरः । यतश्चिन्तनादिविच्छेदक एव परमहानिकरः । अत एव सा हानिः "कालोस्ति यन्न आयुर्हरति वै पुंसा"मित्यादि । भोगश्च स्मरणादिविघातकः । अतः परमहानिकरत्वेन भोगास्त्यक्तव्या इत्यर्थः ॥

नन्विदमसङ्गतम् , तथाहि, अन्येषां यथा तथास्तु, भक्तानान्तु विषया न बाधकाः । यतः सत्स्वपि विषयभोगेषु भक्तिरेव सर्वसाधिकास्ति । अत एव "बाध्यमानोपि मद्भक्तः" "अपि चेत्सुदुराचार" इत्यादि । अत एव भियव्रतमहाराजाम्बरीषादीनामपि

राज्यादिकरणम् । न हि स्मरणादिविघातकेषु ते प्रवर्तन्ते । अतः कथं भगवद्भावविघातका विषया इति चेत् ? स्वानुभवं जानन्नप्येवं वदन् निरपत्रपोऽसि । न हि त्वया भोगं भुञ्जानो भगवच्चरणारविन्दाभिनिविष्टचित्तः कश्चिद्दृष्टचरः श्रुतो वा । ननु श्रुता एव बहवः प्रियव्रतप्रभृतय इति चेत् ? रे मूर्ख ? तेषु भोगस्य नामधानम्, न हि ते विषयेष्वासक्तचित्ताः, किन्तु, केवलं प्रभुचरणपरायणा एव । अतः प्रभोराज्ञया ते राज्यादिकं कृतवन्तो न तु भोगं भुञ्जानाः । नन्वनुभवेन कथं निर्द्धारः प्रमाणसम्मतिं विनानुभवस्य प्रमात्वयोः सन्देहादिति चेत् ? वत्स ? विमलमतिस्ते, यतः प्रमाणसम्मतिमपि श्रोतुकामोऽसि । अवहितः शृणु । प्रथमं तावद्गीतासु श्रीमद्यदुकुलजलधिसमुद्भवश्रीकृष्णचन्द्रोक्तमवधारय । तथाहि, 'विषयान्ध्यायतः पुंसः सङ्गस्तेषूपजायते । सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते । क्रोधाद्भवति सम्मोहः-सम्मोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति' । सङ्ग आसक्तिः, कामोऽभिलाषः, क्रोधः' कोपः, सम्मोहो विवेकाभावः, स्मृतिविभ्रमो भगवच्चरणविस्मरणम्, बुद्धिनाशः सुबुद्धिनाशः, प्रणाशः स्वरूपज्ञानाभावः । मुक्तौ लीलाप्रवेशे वा स्वरूपज्ञानस्तदभावः संसारः । अत एव कपिलदेवैरप्युक्तम्, 'चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् । गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये, इति । ( भा-३-२५-१५ ) गुणेषु रूपरसादिषु पञ्चस्वपि विषयेष्विति यावत् । अत एव "मन एव मनुष्याणां कारणं बन्धमोक्षयोरि"त्यपि । अत एव विषयाविष्टचित्तानां कृष्णावेशस्तु दूरत" इत्यपि । भोगेष्वपि स्त्रीसंभोगः सुतरां बाधकः, तत्क्षणमेव बुद्धिविपर्यासकरत्वात् । अत एव कपिलदेवैरपि 'न तथाऽस्य भवेन्मोह' इत्याद्युक्तम् । 'भोगानभ्यस्य यः सर्वांश्च जातु काम' इत्यादि ययातिवचनम् । 'यदस्तेवाद्वास्थानु'रित्यादि ऋषभवाक्यम् । ननु तर्हि 'बाध्यमानोऽपि मद्भक्त, ( भा. ११-१४-१८ ) इत्यादिना विषयाणामबाधकत्वं कथमुच्यत इति चेद् ? अत्र वदामः । केवलं भजनं कुर्वाणः कदाचिदिन्द्रियनिग्रहं कर्तुमशक्नुवन्विषयैः स्वतः क्लिश्यते, तस्यावश्यमेव भगवान् स्मरन् इति । न तस्य तत्पापभोगो भवति । अत एव कृपयाहं तथा मन्मादयामीति ज्ञापयितुं स्वपक्षपातज्ञापकं 'मद्भक्त' इति पदमुक्तवान् । अत एवा"जितेन्द्रिय" इति तस्याऽशक्ति ( दृष्टा ) दपायां हेतुमुक्तवान् । अजितेन्द्रियः इन्द्रियजयं कर्तुमशक्तः । ईश्वरः केनापि न नियन्तुं शक्य इति कदाचिदेतादृशोऽपि न क्षमां करोति, तदा तेन पापेन सोऽभिभूयत एवेतिभाव इत्युक्तम् । प्रायो बाहुल्येन नतु सर्वथा नियमः । भक्तिरपि भगवत्या नेदृशं प्रासा भवति, नोनेष्व क्षमते । तेनैवं पदयोजना, इन्द्रियजयं कर्तुमशक्तः सन्निरपवेशो यो मद्भक्तः स विषयैः पराजितो न भवति परमया भक्त्या । तथा च अनेनापि भक्तिरुच्चरोत्तरमधिका कार्या, यावत्तावदपि इन्द्रियनिग्रहश्च कर्तव्य इति सूचितम् । यद्वा, पूर्वमजितेन्द्रियः सन् स विषयै-

बाध्यमानोपि, यदा तत्सर्वं परित्यज्य प्रबलभक्तिमान् भवति तदा नाभिभूयत इति। अथवा, मौढ्यप्रकारमेव प्रभुराह 'बाध्यमानोपी'ति । तथाहि, प्रभुर्द्वेधाप्यङ्गीकरोति मर्यादया पुष्ट्या च। तत्र पुष्ट्या यमङ्गीकरोति स नाभिभूयते, प्रगल्भया पुष्टिमार्गीयया। एवमङ्गीकारे निमयाभावात्'स्वयं' इति । यथा राजानोतिकृपापात्राय यत्किञ्चिदपि कार्यमकुर्वाणायापि सर्वस्वं ददति, तस्य सहस्रमप्यपराधान्न मन्यन्ते, गालिदानेपि परिहासं मन्यन्ते । अन्यस्मै च कार्यमकुर्वाणाय किमपि न प्रयच्छन्ति, वचैर्मार्पणेपि दण्डं विदधति, इतरत्रा एतः, तथा भगवानपि यस्मै अतीव कृपयति तस्मै निःसाधनायापि सर्वस्वं ददाति, तस्य सहस्रमपि दुराचाराम्न मनुते । यत्र क्षुद्राः खण्डमण्डलाधिपतयोपि स्वैरचारिणो भवन्ति, तत्र किं वाच्यं त्रिभुवनपरिवृढस्य पुरुषोत्तमस्य स्वच्छन्दाऽऽचरणे। यद्यपि प्रभुः कदाचित्साधनं नापेक्षतेपि, तथापि मर्यादा कदापि कस्यापि न हेया, किन्तु कार्यैव । सर्वेषां प्रभोरिच्छा दुर्ज्ञेया, यतः को वेद भगवान्कथं वा मनुते, कदाचित्प्रभुः लोकसङ्ग्रहार्थमपि कारयति, कदाचिदेवमपि । अतः करणे न बाधकमकरणे तु कदाचित्प्रभुकोपोपि सम्भावितः । तस्मात् "पाक्षिकोपि दोषः परिहरणीय" इति न्यायेन करणीयैव मर्यादा । यदि च मर्यादात्यागे प्रभोरिच्छां जानीयात्तदा त्यागेपि न क्षतिः । अत एव गुर्वादिहननं विदधानोपि पार्थो न दोषभाग् जातः । यदा च ज्ञानस्य भक्तेर्वा माधुर्येण देहाद्यनुसन्धानमेव निवर्त्तते तदा त्यागे न दोषः । अत एव ऋषभदेवजडभरतादीनां तथैवाऽऽचरणम् । यदा च भगवद्वार्तादिषु व्यसनं स्यात्तदा ज्ञात्वापि मर्यादात्यागे न दोषः । अत एव "तावत्कर्माणी"त्यादि । यदा च तत्त्वज्ञानमुत्पद्यते तदापि न दोषः । अत एव "पि चेदसि पापेभ्य" इत्यादि । तस्मात्साधनरूपमिन्द्रियनिग्रहः कर्त्तव्य इति सिद्धम् । अत एव "सर्वेन्द्रियोपशान्त्या च" ।

तत्र भगवदिच्छया यदा भविष्यति तदा भवत्विति प्रकारकमालस्यं न कार्यं, किन्तु स्वयमुद्यम्येन्द्रियनिग्रहः कर्त्तव्य इति ज्ञापनाय स्वयमिति ॥

स्वयमिन्द्रियकार्याणि कायवाङ्मनसा त्यजेत् ।
अशूरेणापि कर्तव्यं स्वस्यासामर्थ्यभावनात् ॥ ८ ॥

बहुवचनेन सर्वेन्द्रियभोगस्त्याज्य इति सूचितम् । यद्वा, भोगानत्यजन्तमन्यं दृष्ट्वा कदाचित्कश्चिदालस्यं कुर्यात्तत्राहुः स्वयमिति, अन्यस्त्यजतु, मा वा, स्वयन्तु त्यजेदित्यर्थः । न ह्यन्यत्रापकर्षं दृष्ट्वा स्वयमप्यपकृष्टेन भाव्यं, किन्त्वन्यत्रोत्कर्षं दृष्ट्वा स्वयमुत्कृष्टेन भाव्यम् । अत एव तैत्तिरीयोपनिषत्स्वाचार्येण शिष्यशिक्षणप्रकारे "यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणी"त्युक्तम् । भोगस्य सामग्र्यां सत्यां धैर्यं दुष्करमिति पूर्वमेव सामग्रीमेव न सम्पादयेदिति ज्ञापनायेन्द्रियकार्याणीति ।

अन्यथा 'भोगांस्त्यजेदि'त्येवोक्तं स्यात् । अत एव "मात्रा स्वस्ये"त्यादि । तेन समूलघातं भोगं हन्यादिति पर्यवसितोऽर्थः । अत एव शब्दादीन्विषयांस्त्यक्त्वेत्यादि । त्यागे प्रकारमाहुः कायेति । कायेन वाचा मनसा चेत्यर्थः । द्वन्द्वसमासोऽयम् । "सर्वो हि द्वन्द्व" इत्येकवद्भावः । यद्वा, "कायवाग्भ्यां सहितं यन्मन" इति मध्यमपदलोपी समासः । तेन कायवाचोर्गौणत्वं तृतीयया सूच्यते । तथा च मुख्यो मानस एव त्यागः । कायिको वाचनिकश्च गौणः । अत एव गीतासु "कर्मेन्द्रियाणि संयम्ये"त्यादि । नन्विदमखिलमशक्यमिव भाति । यतः कठिनतम इन्द्रियनिग्रहः । अत एव गीतासु, "इन्द्रियाणि प्रमाथीनी"त्यादि । उपदेशश्चासम्भवः । न हि शास्त्रमप्यशक्यमुपदिशति । अतः कथमुपदेश इति चेदत्राहुरदूरेणापीति । अशूर इन्द्रियजयं कर्तुमशक्तः । तादृशेनापि यथाशक्तीन्द्रियदमनं कर्तव्यम् । तत्र हेतुः, स्वस्येति भावनात्, विचारणात् । अयमभिसन्धिः । यदि जीवः स्वयं स्वदोषाभिराकर्तुं समर्थः स्यात्तदा मर्यादोल्लङ्घनेन जनितदोषान्निवार्य सुखी स्यात्, परन्तु, स्वयमसमर्थः न हीश्वरमर्यादां मनसाप्यन्यथा भावयितुं कोऽपीष्टे । अत एव 'ईशस्य हि वशे लोक'-इत्यादि । तथा च, विचारे क्रियमाणे निग्रह एवेन्द्रियाणां कार्यः । अत एव "वेन्द्रियाश्वविनिग्रहे" इत्यादि विचारश्चावश्यकः । न हि विना विचारं कोऽपि कुत्रापि प्रवर्तते । "न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तत" इति न्यायात् । कुतस्तराञ्च विवेकी । पदसम्बन्धस्तु, स्वरूपासामर्थ्यविचारणाददूरेणापीन्द्रियनियमनं कर्तव्यमिति ॥ ८ ॥

ननु निग्रहः सर्वथावश्यक इति सत्यं, परन्तु यदि कथमपि कर्तुं न शक्नोति तदा किं तस्य नाश एवाहोस्वित्कश्चिन्निस्तार इत्याशङ्कायामाहुरशक्य इति ।

अशक्ये हरिरेवास्ति सर्वमाश्रयतो भवेत् ।
एतत्सहनमत्रोक्तमाश्रयोतो निरूप्यते ॥ ९ ॥

अशक्येऽर्थे हरिरेवास्ति । रक्षक इतिशेषः । तत्र हेतुः, सर्वमिति । आश्रयतः भगवदाश्रयं कुर्वतः पुरुषस्य सर्वं भवेत् । आश्रयत इति पञ्चमी वा । इदमाकूतम्, यदि सर्वथाऽऽश्रयं ज्ञात्वा केवलं भगवच्चरणमेव भावयति तदा स्वयम् भगवानेव तस्य सर्वं साधयति, अतो भगवदाश्रयात् सर्वसिद्धिः । अत एव "किरातहूणे"त्यादि । अतो न तस्य नाशः । अत एव "कौन्तेय प्रतिजानीही"त्यादि । सर्वदुःखहर्ता हरिः । तेन दीने परमदयालुरितिपक्षस्थं कार्यं साधयत्येवेति ज्ञापनाय हरिपदम् । एव कारेणान्यव्यवच्छेदः । न ह्यन्यः सर्वेषां सर्वदुःखानि निवार्य सर्वानन्दं दातुं शक्तः । एवं सर्वथाऽशक्ये रक्षकत्वेन भगवद्भावनमपि गौणः पक्षः । मुख्यपक्षे तु भगवान् किमपि करोतु, स्वेन तद्भावनमपि न कर्तव्यम् । न लेशतोऽपि सङ्कोचः प्रभो

दातुमुचित इति ज्ञापनाय रक्षक इति विधेयपदस्याप्रयोग एव, किन्त्वध्याहारः। "ब्रह्मवर्चसकामस्त्वि"त्यादिवाक्यात्तत्तन्नियतकार्यसाधका अन्ये, भगवाँस्तु सर्वं साधयति, "अकामः सर्वकामो वे"ति वाक्यात् । यदाहुः सर्वमिति । अत एव "किमन्यच्छ्रयमि"त्यादि । आश्रयत इत्यासमन्तात् श्रयतः सेवां कुर्वतः "श्रिञ्सेवायां," सेवा च चित्तस्य तदेकपरता, "चेतस्तत्प्रवणमि"ति लक्षणात् । तदनुकूला च या काचन कृतिः, सा सर्वापि सेवैव । अत एव "मानसी सा परा मते"ति । तादृश्येव च कृतिः सन्तोषजनिका, सेवा च सन्तोषजनिकैव । "यद्भयें"ति वाक्यात् । लोकेऽपि तात्पर्यपूर्विकैव कृतिः सन्तोषजनिका । तथा च, स्वज्ञानानुसारेण प्रभुसन्तोषजनिकां ज्ञात्वा निरन्तरं कृतिः कार्येति सिद्धम् । शत्रुप्रत्ययेनाश्रयत्यागे किमपि न सिद्ध्यतीत्यप्यसूचि । अत एव "पतन्त्यधोऽनादृत युष्मदङ्घ्रय" इत्यादि । अशक्य इति पदाच्छक्यत्वेऽवश्यमिन्द्रियनिग्रहः कर्तव्य इति सूचितम् । शक्तौ सत्यां मर्यादोल्लङ्घने प्रभुरपि क्रुद्ध्यति । अशक्यत्वे दयाविष्टः सन्सर्वमेव साधयतीति निगर्वः । अत एव सकलदुःखदूरीकरणज्ञापितपरमदयालुत्वज्ञापकं हरिपदं प्रयुक्तवन्तः । अत एव "समस्तदुःखात्ययमाशुधत्त" इत्यादि । ननूपक्रमे त्रिदुःखसहनं धैर्यमित्युक्तम्, उपसंहारे च विषयभोगरूपसुखस्य त्याग उक्तः तथा चोपक्रमोपसंहार विरोध इत्याशङ्क्य निराकुर्वन्त उपसंहरन्त्ययेनदिति । अत्र धैर्यप्रकरणे एत'त्रिदुःखसहनमि'त्यारभ्य पञ्चिरूपितं तत्सर्वं सहनमेवोक्तमित्यर्थः । न हि दुःखमसोढ्वा भोगत्यागः कर्तुं शक्यते, तेन भोगत्यागेनापि पर्यवसन्नं दुःखसहनमेवोक्तमिति नोपक्रमोपसंहारविरोधः । नन्विदं न सङ्गच्छते । तथा हि, भवद्भिः सहनमेव धैर्यमुच्यते, तच्चासङ्गतं, वचनविरोधात्, वचनेषु सर्वत्रोभयोर्भेदात् । तानि च "तेजो बलमि"त्यादीनि । अत एव श्रीमदुद्धवैः पृथक् पृष्टं, श्रीमद्दुर्वंशजलधिरत्नेनापि तथैवोत्तरितम् । तस्मादुभयोरैक्यं कथं घटत इति चेद्, अत्र वदामः। अन्यत्र यथा तथास्तु, अत्रास्मिन्ग्रन्थे एतद्धैर्यमेव सहनमुक्तं न ‖ भिन्नमिति पदसम्बन्धः । वस्तुतस्तु द्वयोरैक्यमेव । उक्तप्रश्नोत्तरयोर्भिन्नतया कथनन्तु अवस्थाभेदमाश्रित्य । ननु समाधृत्योर्भेदः । अत एवोत्तरे 'तितिक्षा दुःखसम्मर्ष'इति सामान्यतः सहनमुक्तम् । 'जिह्वोपस्थजयोधृतिरि'ति विशेषतः । न हि जिह्वोपस्थयोर्जयस्तदुभयसम्बन्धिदुःखसहनादन्योऽस्ति । ये हि तदुभयजयनिमित्त यतन्ते ते तयोर्निग्रहे क्रियमाणे जिह्वाविषयस्य सुस्वाद्वन्नादेरुपस्थविषयस्य स्त्र्यादेरलाभेन यद् दुःखमापन्ने, तत्त्वीदृशमपि कठिनं सहन्ते नत्वन्यत् किञ्चित्कुर्वन्ति । यथा यथा चाभ्यासस्तथा तथाऽनायासेन सहन्ते । अत एव गीतासु क्षात्रस्वाभाविककर्मसु "शौर्यं तेजो धृतिर्दाक्ष्यमि"ति धैर्यं गणितम् । न हि जिह्वोपस्थयोर्जयः क्षत्रियाणां सहजो धर्मः, किन्तु, दुःखसहनमात्रम् । अत एव गीतासु,(११)"धृतिं न विन्दामि गीतासु (१८)"धृत्या यया" । उद्देशक्रमानु-

सारेणाश्रयमाहुराश्रयेत इति। अत इति ल्यब्लोपे पञ्चमी। अत इदं द्वयं निरूप्येत्यर्थः।
तेनैवं पदसम्बन्धः । अतः विवेकधैर्ये निरूप्य तदनन्तरमाश्रयो भगवदेकशरणत्वं
नितरां विविच्य रूप्यते कथ्यत इति । तथा चातः परमाश्रयो निरूप्यत इत्यर्थः ।
यद्वा, हेतौ पञ्चमी । अत आभ्यां विवेकधैर्याभ्यां हेतुभ्यामाश्रयो निरूप्यत इत्यर्थः ।
यद्यपि भगवदनुग्रहं विना नाश्रयः सम्भवति, तथापि, यदा साधनद्वाराङ्गीकरोति
तदा विवेकधैर्येऽपि साधने । अत इति सहार्थे तृतीया । सार्वविभक्तिकस्तसिल् ।
तथा च, विवेकधैर्याभ्यां सहाश्रयो निरूप्यत इत्यर्थ । तृतीयया विवेकधैर्य-
योरप्राधान्यं, प्राधान्यं चाश्रयस्यैवेति निरूप्यते। अथवा, एतद् विवेकसहितं सहनं
धैर्यमत्रास्मिन्ग्रन्थे उक्तं कथितम् । अतो हेतोराश्रयो निरूप्यते अयमभिसन्धिः ।
आश्रयनिरूपणार्थमङ्गत्वेन विवेकधैर्ये उक्ते, तेन यद्याश्रयो न निरूप्यते, तदा विवेकधैर्य-
निरूपणं व्यर्थं स्यात् । तथा चैवं पदसम्बन्धः । यतः कारणादाश्रयनिरूपणार्थमङ्गत्वेन
विवेकधैर्ये उक्ते, अतो हेतोर्विवेकधैर्ययोर्निरूपणस्य सार्थकत्वाय विवेकधैर्यनिरूपणान-
न्तरमाश्रयो निरूप्यत इति। बुद्धिस्थवाचकत्वात्सर्वनाम्नां पूर्वं च विवेकसहितमेव धैर्य-
मुक्तमिति विवेकसहितमेवैतत्पदेनोच्यते । यद्वा, एतद्विवेकसहितं सहनं धैर्यम्, अत्राश्रये
उक्तमभिहितमतो हेतोस्तदुभयनिरूपणानन्तरं यत्रेदं द्वयं निरूपितं स आश्रयो निरू-
प्यत इति । तथाहि, अत्र हि भगवदाश्रये क्रियमाणे यादृशे विवेकधैर्ये अपेक्षिते तादृशे
निरूपिते, स आश्रयस्तदुभयनिरूपणानन्तरं निरूप्यत इति । आश्रयः आसमन्तात्
श्रयः सेवनम्, श्रिञ्सेवायाम्, अस्मात् घञ् । सेवा च चित्तस्य तदेकपरत्वम्, अत एव
"चेतस्तत्प्रवणं सेवे"ति लक्षणमुक्तमाचार्यैः । यद्यपि, मनोवाग्देहैः सेवा त्रिविधा,
तथापि, मुख्या मनोऽर्पणरूपस्नेहात्मिका । अन्या तु सेवा तत्साधनरूपा । अत एव
"चेतस्तत्प्रवणं सेवे"तिलक्षणमुक्त्वा "तत्सिद्ध्यै तनुवित्तजे"ति सेवान्तरस्य तत्साधन-
त्वमुक्तम् । मनोवचनरूपायास्तु "मनसी सा परा मते"ति मुख्यत्वमुक्तम्, इयमेव
भक्तिरित्युच्यते । शाण्डिल्यसूत्रे "सा परानुरक्तिरीश्वरे" इति लक्षणात् । अत एव
नारदपञ्चरात्रे "स्नेहो भक्तिरिति प्रोक्त" इति लक्षणमुक्तम्, तत्र माहात्म्यज्ञानपूर्वकं
तु अपराधनिवृत्त्यर्थम्, न तु लक्षणे प्रविष्टम् । श्रवणादिलक्षणा तु भक्तिस्तत्साधन-
रूपा, अत एव 'भक्त्या सञ्जातया भक्त्ये'ति। अतः सेवामार्गो भक्तिमार्गश्चैक एव ॥९॥

प्रतिज्ञातमाश्रयं पद्यचतुष्टयेन लक्षयन्ति, ऐहिक इत्यादिना ।

ऐहिके पारलोके च सर्वथा शरणं हरिः ।
दुःखहानौ तथा पापे भये कामाद्यपूरणे ॥ १० ॥
भक्तद्रोहे भक्त्यभावे भक्तैश्चातिक्रमे कृते ।
अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः ॥ ११ ॥

अहङ्कारकृते चैव पोष्यपोषणरक्षणे ।
पोष्यातिक्रमणे चैव तथान्तेवास्यतिक्रमे ॥ १२ ॥
अलौकिकमनःसिद्धौ सर्वथा शरणं हरिः ।
एवं चित्ते सदा भाव्यं वाचा च परिकीर्तयेत् ॥ १३ ॥

एवं चित्त इत्यनेनान्वयः । "मुख्यो मानस" इति पूर्वमानसोक्तिः । तत्र सङ्क्षेपत आश्रयस्वरूपमर्द्धेन पद्येनाहुरैहिक इति, ऐहिके इह लोक सम्बन्धिनि, परलोके परलोकसम्बन्धिनि कार्यमात्रे सर्वथा सर्वैः प्रकारैः हरिः श्रीकृष्णः शरणं रक्षकोस्तु। एवं चित्ते सदा भाव्यमित्यग्रिमेणान्वयः । रक्षणं चात्र हितकारित्वं, न तु प्राणरक्षकत्वमात्रम्, लोकेपि महाशास्त्युपस्थितौ धनादिमोषे वा उपस्थिते तस्मान्निवारणे कृते अनेनायं रक्षित इति प्रयोगः । तेनैहिकपारलौकिकयोरर्थयोः सर्वैः प्रकारैस्त्वमेवास्मद्धितकारी भवेति प्रार्थना । जीवाः प्रायेण स्वस्य हितमपि न विदन्ति । हितज्ञानेऽपि प्रबलेषु स्वदोषेषु विद्यमानेषु प्रबलैः प्रत्यूहैः कृत्वा स्वहितं कर्तुं न शक्नुवन्ति । तस्मात्त्वमेव सर्वान्दोषान्निवार्य हितं साधयेति भावः कटाक्षितः । केचनैतादृशा ये किमपि न प्रार्थयन्ते, उत्तमाश्च त एवेत्यपि ज्ञापयितुमस्त्विति प्रार्थनार्थकक्रियापदस्याप्रयोगः । नन्वेतादृशाः के सन्ति, येषामैहिकं पारलौकिकं च किमपि न प्रार्थनीयमस्ति । न हि परमविरक्ता अपि पारमार्थिकाद्विरज्यन्त इति चेद्, अत्र वदामः । येषां प्रभुचरणारविन्दे व्यसनमस्ति ते मुक्त्यादिकमपि नेच्छन्तीति पारमार्थिकमपि न प्रार्थयन्ते । अत एव "न नाकपृष्ठं" "नैकात्मतामि"त्यादिवचनानि । ननु ये मुक्तिं न वाञ्छन्ति, तेपि प्रभुचरणारविन्दानुरागरूपां भक्तिं वाञ्छन्त्येव, न हि भगवदीयास्ततोपि निरपेक्षा भवन्ति । अतः सा भक्तिरेव परमार्थिकी प्रार्थनीयास्तीति प्रार्थनानिरपेक्षाः सर्वदुर्लभा इति चेत्, सत्यम्, दुर्लभा एव, कः सन्देहः, परन्तु, दुर्लभा एव, नत्वलभ्याः, तथाहि, ये चरणारविन्दे व्यसनिनस्ते ततोपि निरपेक्षाः । यदि तावदप्यपेक्षितं स्यात्तदा तद्व्यसनमेव न स्यात् । व्यसनं हि तदेव यत्र तद्विना स्थातुमेव न शक्नोति, इदमेव ( व्यसनं ) तत्र प्रवृत्तिनिमित्तं, नत्वन्यत् किञ्चित् । अत एव लौकिकेपि द्यूतादौ ये व्यसनिनस्ते स्थातुमशक्ता एव तत्र प्रवर्त्तन्ते, नत्वन्यन्निमित्तमस्ति । ननु धनाशैव निमित्तमस्तीति चेत्, रे हृदयशून्य ! यदि धनाशैव निमित्तं स्यात् तदा मुहुर्मुहुः पराजिता अपि कथं प्रवर्तेरन् ? । सन्देहादेव प्रवर्तन्त इति चेत्, ज्योतिर्विद्भिः समूलघातं सन्देहे हतेपि प्रवर्त्तन्त एव । न ह्युपायसहस्रेणापि तत्तद्व्यसनिनः कथमपि तेभ्यो निवर्त्तन्ते क्वचित् । किञ्च, इदमपि द्युते आशङ्कितं स्यात्, व्यसनान्तरेषु का गतिः, न हि पापर्द्धिपरायणा मैरेयमत्ताः परदाररताश्च धनाशया प्रवर्त्तन्ते, प्रत्युत भस्मलीभूतसर्वस्वास्ते । तस्माच्चरणारविन्द-

व्यसनिनोपि निमित्तनिरपेक्षा एव, अत एव कपिलदेवेनापि "अनिमित्ता भागवती"ति फलभक्तिलक्षण मुक्तम् । यदि किमपि निमित्तं तत्र विद्यते तदा अनिमित्तत्वं कथं वदेत् ? अग्रे च "अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे" इत्युक्तम् । "कुर्वन्त्यहैतुकिमपि" । अत एव कौण्डिन्यप्रभृतयस्तथाभूताः । अत एव व्रजवासिनामपि तथा भावः । ननु यदि व्यसनिनः किमपि न प्रार्थयन्ते, सर्वनिरपेक्षत्वात् तदा व्रजवासिनः कथं प्रार्थितवन्तः ? न हि तदपेक्षयाप्यन्ये व्यसनिनः सन्ति, "क्षणं युगशतमिवे"त्यादि वाक्यात् । प्रार्थ्यते च तैरनारतमेव । ननु कैरुक्तं तैः प्रार्थ्यत इति ? शुकादिभिरेव । कुत्र ? श्रीभागवतादावेव । तथाहि, ॥ १२ ॥ "राम ! राम !" ॥ १६ ॥ "कृष्ण ! कृष्ण !" ॥ २० ॥ "राम ! राम !" ॥ "कृष्ण ! कृष्ण !" ॥ २६ ॥ "मैवं विभो" ॥ ४४ ॥ "मनसो वृत्तयः" ॥ ७९ ॥ "आहुश्च ते," इत्यादिषु तत्कर्तृकप्रार्थना श्रूयते । न च तत्र प्रार्थनं किन्तु, कथनमात्रमिति वाच्यम्, "इति विज्ञापितो गोपैरि"त्यादि शुकोक्तिव्याकोपात् विज्ञापनं प्रार्थनमेव, अपि च, अन्ये तु मुक्त्यादिनिमित्तं प्रार्थयन्ते, न लौकिकनिमित्तम् । एते तु क्षुधादिनिवृत्त्यर्थमपि प्रभुं प्रार्थयन्ते । अल्पतमे क्षुन्निवृत्त्यादावपि यदि प्रभुं प्रार्थयन्ते तदा किमुवाच्यं महति कार्ये, यत्र निरुपमनिरुपधिनिरवधिस्निग्धा व्रजवासिनोऽप्यसमर्थयन्ते तत्रान्यः को वा सनाथः स्वनाथं न नाथेत् । तस्मादपार्थः प्रार्थनारहितान्वेषणप्रयास इति चेद्, अत्रोच्यते । प्रथमं तावत्प्रार्थनास्वरूपं विचारय, प्रार्थना नाम कः पदार्थः । ननु ममेदमपेक्षितमित्यपेक्षितकथनं प्रार्थनेति चेत्, न, राज्ञः सेवकं प्रत्येवं वचनमपि प्रार्थना स्यात्, न हि सा प्रार्थना, किन्त्वाज्ञा । तथा मित्रं प्रति अन्यं कश्चिदुदासीनं प्रति तादृग्वचनमपि प्रार्थना स्यात् । न हि सा प्रार्थना किन्तु, कथनमात्रम् । ननु तस्य प्रार्थनात्वे किं बाधकमिति चेत्, प्रयोगाभाव एव, न हि तत्र राज्ञा मित्रेण वा इदं प्रार्थ्यत इति कश्चित्प्रयुङ्क्ते । ननु लाभहेतुकं वचनं प्रार्थनेति चेत्, न, प्रार्थनानन्तरं लाभे तद्वचनस्य प्रार्थनात्वं न स्यात् । लाभरूपकार्याभावेन पूर्ववर्तित्वादिरूपकारणत्वाऽभावात् । न च सा न प्रार्थनेति वाच्यम्, प्रार्थितमनेन न दत्तमिति प्रयोगात् । ननु लाभेच्छया वचनं प्रार्थनेति चेत्, न, प्रजाभ्यो धनं गृह्यतामिति राजाज्ञाया अपि प्रार्थनात्वप्रसङ्गात् । करादिसञ्ज्ञया प्रार्थने अव्याप्तेश्च । न च तत्प्रार्थनमेव न भवतीति वाच्यम्, हस्तेनायं याचत इति प्रयोगात् । गृहीतमौनव्रतस्य भोजनादावपि तथात्वात् । स्यादेतत् । न वयं वचनपर्यन्तं वदामः, किन्तु लाभेच्छया यत्क्रियते तत्सर्वं प्रार्थनेति, तस्माल्लाभार्थमुद्यमः प्रार्थनेति चेत्, मैवम् । एवमत्राप्यव्याप्त्यावर्तनेपि राजाज्ञायामतिव्याप्तिर्वज्रलेपायितैव । ननु दयोत्पादकं वचः प्रार्थनेति चेत्, मैवम् । ननु शृण्वतां दयोत्पादकं "दुष्टेनमाशु मारये"ति महादारुणवचसोपि याच्ञात्वप्रसङ्गात् । ननु

सम्बोध्यस्य दयोत्पादकं वचः प्रार्थनेति चेत्, न, आज्ञप्तस्य दयालुत्वे उक्तवचनेऽतिव्याप्तेः । निर्दयं प्रति प्रार्थने व्याप्तेश्च । अश्रवणे चाव्याप्तेः । न चेदं द्वयमपि न याञ्चेति वाच्यम्, निर्दयोपगतप्रार्थनां न मनुते, व्यग्रोपगतप्रार्थनां न शृणोतीति च प्रयोगात् । किञ्च, "अयं देवदत्तो भृशमक्लेशीदि"ति प्रासङ्गीकोक्तावप्यतिव्याप्तेः । अथ स्वस्मिन्सम्बोध्य दयोत्पादकं वचस्तथेति चेत्, न, "सखे भृशमहमक्लेशिषमि"-तिवृत्तवृत्तान्तवचनेऽतिव्याप्तेः । न हि सुहृत्क्लेशश्रवणेपि नानुकम्पते मनः । अथ दयार्थ-मुक्तिः प्रार्थनेति चेत्, न, किं स्वस्मिन्दयार्थमाहोस्वित्परस्मिन्नुत सामान्यतः । न प्रथमः । परार्थं प्रार्थनेऽव्याप्तेः । न द्वितीयः । स्वार्थं प्रार्थनेऽव्याप्तेः । न तृतीयः । "निर्दयमेनं सदयं कुर्वि"त्युक्तेन देवदत्तेन पूर्वराजकृपादिभिः कृते क्रूरराजप्रबोधनेऽति-व्याप्तेः । न च या च नैव सेति वाच्यम् । राजानमयं पुराणादिभिः प्रबोधयतीति वद्याचत इत्यपि प्रयोगापत्तेः । तस्मात् मीमांसितव्यमेवैतदिति चेत्, न, धात्वर्थविचारेण याचनैव प्रार्थना, न च राजादिवचनादावतिप्रसङ्गः । तत्राऽपकर्षाद्यभावेपि प्रार्थना-त्वस्येष्टत्वात् । अत्र निरपेक्षत्वमपि भगवत्स्वरूपभजनातिरिक्तनिरपेक्षत्वमेव । न हि भगवदीया भगवति निरपेक्षाः, तथा सति ज्ञानमार्गपातात् ॥ १३ ॥

शरणसिद्ध्यर्थमाहुरन्यस्येति ।

अन्यस्य भजनं तत्र स्वतो गमनमेव च ।
प्रार्थनाः कार्यमात्रेपि तथान्यत्र विवर्जयेत् ॥ १४ ॥

देवान्तरस्य भजनं, तत्र देवान्तरसमीपे मार्गत्वाद्यभावेपि स्वेच्छया गमनम्, चकारात्तदर्थमन्यप्रेरणं च विवर्जयेत् । भगवति च कार्यमात्रे अल्पेपि कर्त्तव्ये अथवा सर्वेषु कर्त्तव्येषु प्रार्थना वर्जयेत् । अत्यशक्यार्थे प्रभौ प्रार्थनायां कृतायामपि मुहुः प्रार्थना न कार्येति बहुवचनम् । तथा प्रभुवद् अन्यत्र देवान्तरे प्रार्थना विशेषेण वर्जयेत् ॥ १४ ॥

नन्वेवं सति कथमिष्टसिद्धिः? प्रभुरपेक्षितं कुर्यान्न वेति चेत् तत्राहुरविश्वास इति ।

अविश्वासो न कर्तव्यः सर्वथा बाधकस्तु सः ।
ब्रह्मास्त्रचातकौ भाव्यौ प्राप्तं सेवेत निर्ममः ॥ १५ ॥

भक्तिमार्गे अविश्वासो न कर्त्तव्यः, "ये यथा मां प्रपद्यन्त" इति वाक्यात्, सः सर्वथा बाधकः । विश्वासस्तु कर्त्तव्यः । अनयोः ( विश्वासाविश्वासयोः ) क्रमेण बाधकत्वसाधकत्वयोर्ब्रह्मास्त्रचातकौ भाव्यावनुसन्धेयौ । लङ्कायां राक्षसैर्ब्रह्मास्त्रेण बद्धो हनुमान्न चलितवान्, ततस्तैरन्यैः पाशैर्बद्धमारब्धो ब्रह्मास्त्रे राक्षसानामविश्वासं दृष्ट्वा स्वयमपि ब्रह्मास्त्रमर्यादामुल्लङ्घ्य ततश्चलितवान् । ततो ब्रह्मास्त्रं व्यर्थमभूत् । एवं भक्तिमार्गाऽ-

विश्वासे भक्तिमार्गीयं सर्वं व्यर्थं भवति । चातकः पक्षिविशेषः, स्वातिर्वर्षिष्यति स्वातिजलमेव मया पेयमिति विश्वासेन महदन्यत् जलं विहाय तिष्ठति, तद्यं स्वातिर्वर्षति स पिबति । एवं भक्तिमार्गे हरिः सर्वं करिष्यतीति विश्वासेन भक्तिमार्गमर्यादां गृहीत्वा यस्तिष्ठति, तस्य योगक्षेमनिर्वाहं प्रभुः करोति, "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति वाक्यात् । सर्वं भगवत एव, अहं भगवद्दासो भगवदर्थमेव भगवते समर्पयामीति ममत्वं त्यक्त्वा प्राप्तं सेवेतेत्याहुः प्राप्तं सेवेत निर्ममः इति ।

नन्वेवं ममत्वाभावे भगवत्कार्यातिरिक्तं कार्यं न कर्तव्यमिति चेत्तत्राहुर्यथाकथञ्चिदिति ।

यथाकथञ्चित्कार्याणि कुर्यादुच्चावचान्यपि ।
किं वा प्रोक्तेन बहुना शरणं भावयेद्धरिम् ॥ १६ ॥

उच्चावचान्यनेकप्रकारकाणि, वैदिकानि लौकिकान्यप्यविरुद्धानि कार्याणि । यथा कथञ्चिद् न विस्तारेण कुर्यात्, व्यवहारोपयोगित्वाद्, व्यवहारस्य परम्परया भगवज्जनोपयोगित्वादित्यर्थः । कियन्तः प्रकाराः वक्तव्या इति सङ्क्षेपेणाहुः किं वा प्रोक्तेन बहुनेति । धर्मैर्भिर्न मम निस्तारः, किन्तु, भगवदाश्रया कृतैः भगवान्सत्कः शरणं भवत्विति भावयेदित्याशयेनाहुः शरणं भावयेद्धरिमिति ॥ १६ ॥

नन्वाश्रयनिरूपणेऽन्यस्य भजनवर्जनादिकं किमित्युक्तमित्याशङ्क्याहुरेवमाश्रयणमिति ।

एवमाश्रयणं प्रोक्तं सर्वेषां सर्वदा हितम् ।
कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः ॥ १७ ॥

इति श्रीमद्वैश्वानरश्रीवल्लभाचार्यचरणविरचितो
विवेकधैर्याश्रयः सम्पूर्णः ।

---

"यावदन्याश्रयस्तावद्भगवानपि तं जनम् । आलोकयेन्न कृपया, अनन्यजनवत्सल" इति प्रह्लादवाक्यात् । अन्यभजने सम्यगाश्रयणमेव न सिद्ध्येदिति तदभावस्याङ्गत्वात् प्रथमाधिकारस्थत्वात् । अनेन प्रकारेण साङ्गमाश्रयणमेव प्रोक्तं तत्सर्वेषां वर्णानामाश्रमाणां च सर्वकालं सुखकारि । ननु मुख्या भक्तिः कुतो नोच्यत इति आशङ्क्य, "प्रायेणाल्पायुषः सूत कलावस्मिन्युगे जनाः । मन्दाः सुमन्दमतयो मन्द-

भाग्या ह्युपद्रुता" इति कलावेतादृशा जनाः किं साधयेयुः ? अशक्योपदेशो वाऽनाप्तत्वं स्यात् । इत्येवमाश्रये क्रियमाणे भगवान्कृपया भक्तिमपि दास्यतीत्याशयेनाहुः कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिरिति। भक्तिरादिर्येषां ते भक्त्यादयः। तेन च ते मार्गाश्च भक्त्यादिमार्गाः । प्रावाहिकभक्तिमार्गो मर्यादाभक्तिमार्गः पुष्टिभक्तिमार्गश्चेत्यर्थः ॥ १७ ॥

विवेकधैर्याश्रयाणां विवृतिः कृतिमर्पणे ।
श्रीगोविन्दसुतेनोक्ता गोकुलोत्सवसूरिणा ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीगोविन्दरायात्मजश्रीगोकुलोत्सवविरचिता विवेकधैर्याश्रयविवृतिः सम्पूर्णा ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

श्रीवैश्वानरावतारश्रीमद्वल्लभाचार्यचरणविरचितः ।

# विवेकधैर्याश्रयः ।

## श्रीश्यामलसुतश्रीव्रजरायचरणविरचिता विवृतिः ।

यत्कृपामात्रतो नूनं रतिः स्याद्गोकुलाधिपे ।
स श्रीमदाचार्यपादरेणुर्मेऽद्य प्रसीदतु ॥ १ ॥

अथ श्रीमदाचार्यचरणा निबन्धे वैदिकयोः कर्मज्ञानमार्गयोर्भक्तिमार्गस्य च सम्यक्प्रपञ्चितत्वेऽपि कलौ तेषां दुःसाध्यत्वं विमृश्य तत्रासमर्थानामर्थं सङ्क्षेपेण 'जगाध्ये विट्ठले वे'त्यत्रोक्तं प्रपत्तिमार्गं हृदि सिद्धवत्कृत्येदानीं तं प्रपञ्चयिष्यन्तस्तस्य मार्गस्य पूर्वोक्तमार्गत्रयोपकारकत्वञ्च बोधयिष्यन्तो विवेकधैर्याभ्यामाश्रयस्य सिद्धिं बोधयितु तत्साधने विवेकधैर्ये रक्षितुं नियुञ्जन्ति, तद्रक्षणस्यावश्यकत्वं वा बोधयन्ति । विवेकेत्यादि ।

विवेकधैर्ये सततं रक्षणीये तथाश्रयः ।
विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यति ॥ १ ॥

सततं निरन्तरं रक्षणीये इति श्रेये भाग्यकाले वा अनीयस्तेन नियोग आवश्यकत्वञ्च समञ्जसम् । रक्षणे नैरन्तर्योक्त्या आश्रयोत्तरपपि तद्रक्षणावश्यकत्वं बोध्यते । रक्षणञ्चात्र तबाधकनिवारणेन तपोपणम् । एतदेव साम्प्रदायिकैः स्वीकारत्वेन तदनुसन्धानपूर्वकतदनुकूलाकृतिकारणत्वेन च बोधितम् । तेन 'फलमादुस्तथात्र' इति । तथाकृते आश्रयः सिद्ध्येदित्यर्थः । यद्वा, ते तथा तेन प्रकारेण रक्षणीये यथा आश्रय सिद्ध्येदित्यर्थः । यत्तदोर्नित्यसम्बन्धात् क्रियापात्रस्यैवाध्याहारः । आश्रये क्रियासम्बन्धस्य कण्ठतोऽनुक्त्या पृथगुपादानेन च स्वकृत्यसाध्यत्वं तदेकदानसाध्यत्वञ्च ज्ञाप्यते । "सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रहमीशमन्ये" इत्यक्रूरस्तुतौ सुबोधिन्यां तथा प्रपञ्चनात् । अत्र साम्प्रदायिकाः । अध्याहारापेक्षयाऽनुसङ्गस्य वचनविपरिणामस्य च लघुत्वात्तथा आश्रयो रक्षणीय इत्येवं योजनं उपायो भव्या केचन

त्रयाणां दण्डचक्रादिन्यायेन भक्त्युपायत्वसामान्यात् समप्राधान्यं रोचयन्ते । केचन पूर्वयोरेकपदेन कथनात् तृतीयस्य पृथगेवोपादानात्पूर्वयोरुत्तरहेतुत्वं सुकमुत्पश्यन्ति । केचन त्रयाणां क्रमेणोक्तेः सेवायां महत्त्वस्य पूर्वं विवेक आवश्यकस्ततो धैर्यम्, आश्रयस्तूभयनिर्वाहक इति तात्पर्यं प्रकाशयन्ति । यद्यप्येवं मतत्रयमप्युपपन्नं, तथापि, सर्वात्माश्रयस्य फलत्वस्यावबोधनात् स्वस्याभिसंहितरूपेणाश्रयस्यैव मुख्यत्वप्रकाशनाध्याहारेण योजनाप्यदुष्टैव । न च गौरवं शङ्कनीयम् । तत्पक्षेप्यनुषङ्गविपरिणामयोर्द्वयोरङ्गीकारेण तौल्यात् । किञ्चैवं "पृथक् शरणमार्गोपदेशे"ति नामापि सुष्ठार्थं भवति । अन्यथा तु निबन्धे सङ्क्षेपेण निरूपणात्सुबोधिन्यादावन्यथोपलम्भेन क्वचित् सङ्कीर्णत्वादत्र तत्र किञ्चित् किञ्चित् कथनेन विप्रकीर्णत्वाच्च 'पृथक्'पदमपुष्टार्थं स्यात् । न चैवं सति भक्त्यङ्गत्वभङ्गात् सुबोधिन्यादौ तथात्वेन निरूपणं विरुद्ध्येतेति वाच्यम् । उपकारकत्वेन गौण्यापि तत्सम्भवात् । किञ्चायं शरणमार्गो न भक्तिमार्गाद्विविक्तः, पुष्टिप्रवाहमर्यादाग्रन्थे पृथक् तदनुक्तेः । किन्तु, प्रवाहादन्तर्गतं विविक्तो भगवति स्वस्वामित्वस्य सर्वदानुसन्धानान्मर्यादाया अपि विविक्तः, पुष्ट्या सङ्कीर्णः । तेन प्रयोजनैक्यादत्र मिश्रभेदेष्वेतन्निविष्टत्वानुक्तेरग्रे च प्रपत्त्याश्रयकथने "कलौ भक्त्यादिमार्गा हि दुःसाध्या इति" मार्गत्रयदुःसाध्यत्वस्य हेतुत्वकथनेनास्य भक्त्यादिमार्गानुकल्पत्वबोधनाच्च स्वरूपभेदात् त्रितयसजातीयः स्वफलसाधनेन तदुपकारकश्चेति सिद्ध्यति । तत्रानुकल्पत्वं "नामान्यनन्तस्ये"त्यत्र प्रथमस्कन्धपद्ये प्रपञ्चितम् । यद्यपि, तद्विरक्ताधिकारित्वं तथापि, गीताया द्वादशेऽध्याये "अथैतदप्यशक्तोसि कर्तुमुद्योगमाश्रित" इत्यत्र "सर्वधर्मानि"त्यत्र च, गृहस्थमर्जुनं प्रति कथनाद् गृहस्थाधिकारिकत्वमपि सिद्ध्यति । अनुकूलस्योपकारकत्वञ्च पूर्वतन्त्रसिद्धम् । एतावानयं विशेषस्तत्र फलोपकारकत्वं सिद्धमत्र तु स्वरूपोपकारकत्वमप्यस्तीति । तेन येषां यथा भातस्तैस्तथा विवृत इति कोपि क्वापि विरोधः । ननु निबन्धोक्तस्यैवायं विस्तार इति कथं ? निगन्तव्यमिति चेत्, इत्थम् । तत्र पूजाप्रवाहस्य भगवत्सान्निध्यगमकत्वमुक्त्वा तत्र तत्परत्वेन स्थितिः प्रपत्तिरितिमार्गस्वरूपं निष्कृष्टम् । परन्तु, तच्छरीरप्रविष्टं तत्परत्वं न विचारितम् । तदत्र सिध्यतीति तथा विनिगम्यते । किञ्च, प्रपत्तिपदार्थः शरणगमनम् । "कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन, वयं त्वां शरणं याम" इति मागधरुद्धराजवाक्यसुबोधिन्यां प्रपन्नभयनिवारकत्वं तवावश्यकं, "अतो वयं प्रपन्ना भवाम" इत्युक्त्वा "वयं त्वां शरणं याम" इति शरणगमनस्य प्रपन्नभजनत्वेन व्याख्यानात् । तथात्र स्फुटमतोपि

---

१ अनुकूलस्योपकारकत्वं "अपि सम्पन्नं सुमन्त्रणि" इत्येकादशेऽप्रपञ्चितम् । २ "अधिकारिकम्" इति पाठः क ।

तयेतिदिक् । प्रकृतमनुसरामः । एवमुभयोर्विवेकधैर्ययो रक्षणं, तस्य फलसम्बन्धश्च बोधयित्वा तयो रक्षणप्रकारमाश्रयस्य च मार्गं वक्तुं तेन तत्स्वरूपञ्च वक्तुमुद्देशानुसारेण प्रथमं विवेकस्य स्वरूपमाहुः विवेकस्त्वित्यादि । साम्प्रदायिकास्तु, 'विवेकोयं समाप्त इतः' 'एतत्सहनमत्रोक्तम्' 'एवमाश्रयणं प्रोक्तमि'त्युपसंहारदर्शनात् सामान्यविशेषभावेन विवेकधैर्याश्रयाणां स्वरूपस्यैव निरूपणमत्र ग्रन्थनाम्ना समासव्यासधारणस्य विद्वन्निष्ठत्वेन च तथा कथनस्यौचित्याचेत्याशयेन व्याकुर्वन्ति । तथा सति रक्षणप्रकारस्यार्थात् सिद्धिः । एवन्तु वचनादिति शेषः । प्रकृतमनुसरामः । विवेकशब्दः पृथक्त्वे तज्ज्ञाने वा प्रसिद्धः । यथा नित्यानित्यवस्तुविवेक इति । शीलविशेषे च यथा उचितसत्कारकर्तरि विवेकीति । "विवेकः पुनरेकान्ते जलद्रोणीविचारयो"रिति कोशात्त्रिषु रूढश्च । तदत्र किमपि न विवक्षितमिति ज्ञापनाय तुशब्दः । कस्तर्हि ? । हरिः सर्वं निजेच्छातः करिष्यति । हरिः सर्वदुःखहर्ता सर्वं स्वीयानां लौकिकालौकिकं, निजेच्छातः स्वतन्त्रेच्छातः, क्रीडेच्छातो वा, निजानामिच्छातो वा, करिष्यति । अपश्च नि॰॰॰निर्देशस्तेनैतद्विषयकमनुसन्धानं विवेक इत्यर्थः । अत्र हरिपदेन गजेन्द्रमोक्षकर्तृत्वस्फोरणात्पशुवदज्ञानामत्यन्तदुःखहारित्वं सूच्यते । निजेच्छात इत्यनेन "क्रीडाभाण्डमिदं विश्वं" "क्रीडार्थमात्मन इदं त्रिजगत्कृतमि"त्यादिवाक्योक्तं जगतः क्रीडाभाण्डत्वं स्मार्यते । इच्छाविशेषणीभूतनिजपदेन स्वस्य विशेषतस्तदीयत्वञ्च । अतः स्वस्याक्षरे क्रीडाभाण्डत्वे वा स्फुरिते, "विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः, क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थ" इत्यादिरूपेणानुसन्धेयम् । विशेषतस्तदीयत्वस्फूर्तौ "अहं भक्तपराधीनः", "मयि ते तेषु चाप्यहं," "आत्मारामोप्यरीरमदि"त्यादिवाक्योक्तं भगवतो भक्ताधीनत्वं परोक्षेण हितकारित्वं स्वनिकटवर्तित्वं स्वरूपमर्यादामप्यतिक्रम्य भक्ताभिलाषपूरकत्वं यथाधिकारमनुसृत्य भाविहितकारित्वमनुसन्धेयमिति तस्य तस्य तात्कालिकानुसन्धानं विवेक इति भावः । करिष्यतीति भविष्यदर्थकप्रयोगो भाव्यर्थचिन्ताया ज्ञापमानत्वात्तन्निष्ठत्वार्थो, न [illegible] भूतवर्तमानयोर्भगवत्कार्यत्वानुसन्धानव्यावृत्त्यर्थः । तेन फलोत्पत्त्यर्थं करिष्यतीति प्रेमाप्यनुसन्धानं विवेक इति फलति ॥ १ ॥

एवं स्वरूपं विवेकस्य निरूप्य रक्षणप्रकारं वदिष्यन्तस्तत्प्रसङ्गेन कामनापारतन्त्र्यसाधनस्य च तत्साधकत्वं इदिकृत्य गजेन्द्रवत् प्रार्थनस्यापि प्रार्थनस्यबाधकत्वञ्च इदिकृत्य ततो रक्षितुं प्रार्थनस्य फलव्यभिचारित्वं युक्त्या समर्थयन्ति प्रार्थितेवेति ।

पार्थिते वा ततः किं स्यात् स्वाम्यभिप्रायसंश्रयात् ।
सर्वत्र तस्य सर्वं हि सर्वसामर्थ्यमेव च ॥ २ ॥

चेत्यनादरे, अभ्युपगम्य दूष्यते, प्रार्थिते प्रार्थनकृते ततः प्रार्थनात् किं स्यात्? न किमपीत्यर्थः। न हि गजेन्द्रस्य प्रार्थनातो मोक्षदानं, किन्तु स्वेच्छातः। यदि ततः स्यात् प्राग्जन्मन्येव स्यात्, "जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितमि"ति वाक्यात्तदानीमपि प्रार्थनस्य तुल्यत्वात्। किन्तु, विचारितस्य मर्यादास्थापनस्य भक्त्या तोषस्य स्वसर्वात्मत्वज्ञापनादेश्च कार्यस्य जातत्वेन स्वेच्छात एव। अन्यथा "नय मामि"-त्यत्र नान्तर्दध्यात्। अथाऽपेक्षितदानप्रापकत्वात् प्रार्थनयैव चेदाद्रियते तदापि, कालविलम्बेन फलव्यभिचारेण चान्यथासिद्धत्वम्। अथ सापि चेत् कथञ्चित् परिह्रियेत तर्हि, सा भगवदभिप्रायनिश्चयकृता प्रार्थना, न तु स्वाम्यभिप्रायसंशयकालीना। तथा सति तत्रापीच्छैव कारणत्वेन पर्यवस्यतीति तत्र प्रार्थनाया व्यापारतामात्रं सेत्स्यति। संशयकालीनायास्तु तदपि न। प्रत्युताधीरत्वज्ञापकतया क्रोधोपेक्षावहतया वा बाधकत्वञ्च। एतेनैव भ्रमकालीनापि व्याख्यातैव। किञ्च, यथा तथास्तु, स्वस्य जीवत्वेनाल्पज्ञत्वात् स्वमनोरथस्याप्यल्पत्वात्प्रार्थितस्तावदेव दास्यति कुब्जाया इव। कुमनीषित्वञ्चाधिकं भविष्यति। अप्रार्थितस्तु प्रभुरलौकिकत्वाच्चतोऽनन्तगुणं दास्यति। तदुक्तं "मनोरथान्तं श्रुतयो यथा ययुरि"ति। तदेतदुक्तं प्रार्थिते वा ततः किं स्यात्स्वाम्यभिप्रायसंशयादिति। तथा च प्रार्थनेन दाने विवेकस्य सामर्थ्यनाशः, अदाने खेदात् स्वरूपनाशस्ततोऽस्माद्बाधकादेवं विचारेण स रक्षणीय इति भावः। एतेन कामनायाः पूरकं साधनान्तरं कैमुतिकादेव निरस्तम्। प्रार्थनैव चेन्निष्फला काम्यकर्माणि किमुतेति। 'सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा, विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्न" इति तृतीयस्कन्धे काम्यकर्मणां फलव्यभिचारस्यानिष्टहेतुत्वस्य च विदुरेणैव दर्शितत्वात्। न च साङ्गाद्वैदिककर्मणः फलावश्यंभावनियमात्फलव्यभिचारो न प्रस्तावसर इति शङ्क्यम्, दक्षयज्ञादिवत् साङ्गताया एव दुर्घटत्वात्। इदं यथा तथा "कर्मणां गहनागतिरि"त्यत्र निबन्धे प्रपञ्चितमिति ततोऽवधेयम्। नन्वस्त्वेवम्, तथापि निन्दावाक्यात्कुब्जादावप्यभिप्रायाज्ञानादेव प्रार्थनस्य तथात्वं, ज्ञाने तु न तथा दोष इति स्वाभिलाषपूर्त्यर्थं प्रभुर्विज्ञापनीय एवेति चेत्तत्राहुः सर्वत्रेत्यादि। सर्वत्र ब्रह्माण्डे अन्तर्बहिश्च तस्य स्वामिनः सर्वं वस्तुमात्रमस्तीति शेषः। ह्रीतियुक्तं क्रीडार्थत्वात्, सर्वसामर्थ्यञ्च तस्यैव, "यः सर्वज्ञः सर्वशक्तिः," "सर्वस्य वशी सर्वस्येशान," इत्यादि श्रुतेः। तथा च यदि दित्सेत् सर्वज्ञत्वादस्मदभिलाषं ज्ञात्वा तदैव दद्यात्। यदि जीवे तत्फलानुभवासामर्थ्यं पश्येत्तदपि विदध्यात्। तन्मनोभिलषितप्रकारेणैव स्वस्मिन्नपि तथात्वं प्रकटीकृत्य वा तन्मनोरथं पूरयेत्। एतदपि, "एवं सन्दर्शिताध्यङ्ग हरिणा भक्तवश्यता, गोपीभिः स्तोभितोऽनृत्यत्," दर्शयंस्तद्विदां

लोक आत्मनो भृत्यवश्यतामि"त्यादिभिरुक्तम् । एवं सत्यपि यच्च ददाति तस्माद् दित्सतीति निश्चितम् । निश्चिते चाभिप्राये प्रार्थना न प्रस्तावसरेति न प्रार्थनीय इत्यर्थः । एतदेवाभिसन्धाय श्रीमत्प्रभुचरणैरुक्तं, "यथा वयं तदीयाः स्युस्तथा सोऽपि निसर्गतः, अस्मत्प्रभुस्ततश्चिन्ता नैहिके पारलौकिके" इति । एवं कामितपूरकाद्रक्षणप्रकार उक्तः । अतः परं कामनातो रक्षणप्रकारो वक्तव्यस्तं वक्तुमाहुरभिमान इत्यादि ।

अभिमानश्च सन्त्याज्यः स्वाम्यधीनत्वभावनात् ।
विशेषतश्चेदाज्ञा स्यादन्तःकरणगोचरः ॥ ३ ॥

अभिमानो गर्वः । यौगिकार्थग्रहणे अभितः उभयतो मानोऽभिमानः, स्वतः परतश्च चित्तसमुन्नतिः पूजा वा । तत्सर्वमत्राभिमान इत्यनेन सङ्गृह्यते । चकारात्तत्साधनादिश्च । ॥ सम्यक् लौकिकप्रकारेण त्याज्यः । तत्र हेतुः, स्वाम्यधीनत्वभावनादिति । ल्यब्लोपे पञ्चमी । स्वस्य स्वाम्यधीनत्वं विभाव्य त्याज्य इत्यर्थः । कामनामूलं हि गर्वश्चित्तोन्नतिः पूजा च । अहमीश्वरः, ईशकुलोत्पन्नः, ईशैश्च प्रशस्यः, इत्याद्यनुसन्धान एव । तदनुरूपकामनादर्शनात् । तदनुत्पत्तिर्निवृत्तिश्च स्वाम्यधीनत्वभावनया, तद्धेतूनां तददर्शनात् । किञ्च, गर्वादिजनकस्य स्वोत्कर्षस्यापि तदधीनत्वमेव, तस्य सर्वकारणत्वाद्भावनीयम् । तथा सति यथेदं सम्पादितवान् तथाऽन्यदपि सम्पादयिष्यतीत्यपार्या कामना, तन्मूलो गर्वादिर्भेदादिभावनेन तन्निवार्य विवेको रक्षणीय इति भावः । एतेनेदमपि ज्ञापितम्, भक्तानां दासत्वात्स्वतोऽभिमानासम्भवः, किन्तु, दुःसङ्गादिवशात् । सोऽपि दासधर्मस्य स्वाम्यधीनत्वस्य भावनात्त्याज्यः । कदाचित्प्रभुः कृपया तदधीनत्वं स्वस्मिन् प्रदर्शयेद्वया वा सेवां कारयेत्तदापि, तद्भावनात्तेन न कार्यस्त्याज्यश्च । यदि वा स्वतन्त्रेच्छत्वाद्दण्डं कुर्यात्तदा खेदोऽपि त्याज्य इति चकारोऽनुक्तसमुच्चायकः । अत्र हेतुवचनादेहाभिमाननिवृत्तिस्तु न विवक्षितेति प्रतिभाति । अथ विवक्षिता तदा सेवनशरणागतमतिहृल्लेखाप्यासनिवृत्तिर्भविष्यतीति न विवादलेशः । एवमान्तरो रक्षणप्रकार उक्तः । अतः परं बाह्यं वदिष्यन्त उक्तरीत्याभिमानत्यागेन रक्षणे दवित-द्वयभिज्ञापकं भगवदाज्ञारूपमवान्तरफलमिव प्रदर्शयन्तस्तस्यां स्वाज्ञाविरुद्धायामप्रपत्तः पाशारज्जुरिति शङ्कामपि वारयन्तः, प्रयोजकविभागेन स्वरूपविभागेन विषयविभागेन च व्यवस्थामाहुर्विशेषत इत्यादि ।

विशेषतश्चेदाज्ञा स्यादन्तःकरणगोचरः ।
तदा विशेषगत्यादि भाव्यं भिन्नं तु दैहिकात् । ॥ ४ ॥

उक्तहेतुर्हेतुपञ्चम्या अत्राप्यन्वेति। अन्यथास्य मन्यस्याकरिफलता स्यात्। सेवादेर्हेतुत्वपक्षेऽपि स्वाम्यधीनत्वभावनस्य तत्राप्यावश्यकत्वात्सहकारित्वमदण्डवारितमेव। तथा च तस्मात्तत्सहकृतसेवादेर्विशेषतः श्रीमदाचार्याज्ञातो विशेषमाधिक्यं विषयीकृत्य वाऽऽग्रहबोधकप्रकारतो वा दैहिकाद्याधिक्यं वैलक्षण्यं विषयीकृत्य च चेद्भगवत आज्ञा स्यात्, तदा तत्प्रयोजकं विचारणीयं, किमयमन्तःकरणगोचरो न वा। अभ्रहल्लिङ्गमिदम्। अन्तःकरणमभिप्रायस्तस्य गोचरः विषयभूता अभिप्रायप्रयुक्ता न वेति। किञ्च, अन्तःकरणस्य गोचरः, अन्तःकरणे विषयत्वेन भाता, न तु स्वामी, न वान्यद्वारिकेतिस्वरूपमपि विचारणीयम्। न चैवं सकृदुच्चारितः शब्दः सकृदर्थं गमयतीति नियमभङ्ग इति शङ्क्यम्, मायिकत्वात्। अन्यथा श्लिष्टप्रयोगोच्छेदप्रसङ्गात्। अर्थोर्थद्वयमप्यत्र सङ्ग्राह्यम्। तत्र यद्यन्तःकरणप्रयुक्तत्वेनान्तःकरणे भाता स्वामीप्रभृतित्वदुष्टत्वेन च भाता, तदा तु दैहिकादेहसम्बन्धिनो भिक्षाद्यां विशेषगत्यादि भाव्यमुत्साधं कार्यमिति यावत्। तथा चायमर्थः। आज्ञाविषयविचारेण तत्प्रयोजकं निभेयम्, यदि दैहिकविषया तदा नाभिप्रायपूर्विका, किन्तु, परीक्षार्था, तदा ततोऽवगतं विशेषगतिसाधनादिकं न कार्यम्। यदि स्वसेवाविषया, यदि वा सेवाप्रतिबन्धकनिवर्तकविषया तदा साभिप्रायपूर्विका, ततस्तदवगतो विशेषः सामर्थ्यादिविषयस्तादृशी गतिस्तीर्थदेशान्तरादिविषया, आदिपदेन तादृशं तत्साधनञ्च कार्यम्। तेन यावतो रक्षणमान्तरस्य स्वतुष्टिस्त्वाभिज्ञानमाज्ञाद्वयं विरोधपरिहारश्चेति सर्वं सामञ्जस्यमिति भावः। पुष्टिमार्गस्य नानाविधस्यापि कृपात एव प्रकटनात्। "सर्वधर्मान् परित्यज्य," "तस्मात्त्वमुद्धवोत्सृज्य," "मम तथाखिलसेव्यपाथिपि"त्यादिवाक्यैः शरणागतौ सेवायां च भगवत्तात्पर्यात्। "अनन्याश्चिन्तयन्तो मामि"तिवाक्येन भगवत एव जीवस्याखिलनिर्वाहकत्वावगतेश्च नात्र कोपि शङ्कालेशः।

ननु दैहिकातिरिक्तविषयाया भगवदाज्ञायां जातायां यदि तद्विरोधिनी काचिदापदन्तरा समागता, तदा आज्ञायाः करणे निर्वाहाभावादाज्ञायाऽसिद्धिः, अकरणे तद्भङ्गात् स्वामिद्रोह इत्युभयतः पाशारज्जुरित्यतस्तत्रोपायमाहुरापदित्यादि।

आपद्गत्यादिकार्येषु हठस्त्याज्यश्च सर्वथा।
अनाग्रहश्च सर्वत्र धर्माधर्माग्रदर्शनम्॥ ५॥
विवेकोयं समाख्यातः

उक्तहेतुरत्राप्यनुवर्तते, आपदो गतिः आश्रितापद्गतिः, सा आदौ येषां, तादृशानि यानि कार्याणि, अत्र शर्या इति यावत्। तेषु "स्वाम्यधीनत्वभावनात्" हठस्त्या-

ज्यश्चाग्रहस्त्याज्यः । चोऽप्यर्थे । अयमाशयः, निर्वाहो ह्यभिप्रायस्य लिङ्गम् । प्रतिबन्धकाभावे निर्वाहाभावात्साऽऽज्ञा नाभिप्रेता, परीक्षार्थैवेति निश्चेयम् । नहि भगवतो भक्ताऽऽपदभिप्रेता, [redacted] वा कालादयस्तत्र प्रभवन्ति, "ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहमि"ति वाक्यात् । अत आपत्पराभूताया आज्ञायाः परीक्षार्थत्वेनानभिमतत्वान्नोक्तदोषः । किञ्च, हठेऽनिष्टसम्भवात्सेवायामतिबन्धः पर्यवस्यतीत्यतो हठो न कार्य इति ज्ञापनाय सर्वथेति । उक्तसमुच्चयार्थश्च । एतेनैतद्करणे हेत्वनुसन्धानप्रावल्यादभिमाननाशे विवेकपोषणम्, हठे तु तन्नाश इति द्वितीयं कायिकं हठत्यागेन करणरूपं रक्षासाधनमुपदिष्टम् । अथ दैहिकादिविषये व्यवस्थामाहुरनाग्रह इत्यादि । सर्वत्र दैहिके चोनुक्तकार्यान्तरसम्बन्धिसम्बन्धिन्यन्यस्मिंश्च कार्ये अनाग्रहः, "कार्य" इति शेषः । सायासम्पौदान्वरसमुच्चायकः । तथा च, स्वतःसिद्धावतिसुखसाध्ये च न विचारः । सायासं चेत्सौन्येन कार्यं, तेन विवेकपोष इति भावः । अत्र हेत्वनुक्तिर्बोध्या । नन्वस्त्वेवं लौकिके, परं वैदस्य तु सामान्याज्ञाविषयत्वादाग्रहः प्रसज्येतैवेति चेत्तत्रोपायमाहुर्धर्मेत्यादि धर्माधर्मयोर्विहितनिषिद्धयोरग्रं पर्यवसितं परिणामस्तस्य दर्शनं विचारस्तत्कार्यमिति शेषः । पौराणस्मार्तश्रौतानामुत्तरोत्तरमुत्सर्गतो बलिष्ठत्वं, तथैव शारीरात्मभागवतधर्माणाम्, तेषु स्वयं तादृशे भगवद्धर्मे निष्ठितस्तदविरोधिपरिणामकः कार्यः, इतरो न कार्यः । तथा अधर्मोऽपि म्लेच्छसम्भाषणानुसरणादिरूपो बुद्धिमक्लुपयन् स्वधर्मनिर्वाहाय चेद्युक्त्या कार्यः, इतरस्तु न कार्य इति । तत्रापि "स्वाल्पधीनस्य मावनाद्यपातस्सिद्धिस्तथा विवेकरक्षणमनुसन्धेयमिति भावः । एवं सपरिकरं विवेकं निरूप्योपसंहरन्ति । विवेकोयं समाख्यात इति, अयं न लभ्यो विवेकः । सम्यक् रक्षाप्रकारोपदेशपूर्वकमाख्यातः प्रमाणयुक्तिगर्भाभिरुक्तिभिः कथित इत्यर्थः ।

एवं विवेकं निरूप्यातः परं प्राप्तावसरं धैर्यं निरूपयन्ति धैर्यन्तु विनिरूप्यते इति ।

धैर्यन्तु विनिरूप्यते ।

पूर्वोक्तरीत्या विवेकरक्षणे जिह्वोपस्थनयनादिरूपस्य धैर्यस्य प्रसङ्गत एव सिद्धेस्तन्निरूपणं न प्राप्तावसरमिति शङ्कानिरासाय तुशब्दः । विवेकस्वरूपे हृदयारूढे धैर्यं स्वत एव भवेत्, परं याथात्म्येन स्वरूपे अज्ञानेऽरक्षणे च कदाचिदिन्द्रियच्छिद्रपेयादपि, अतस्तदर्थं विशेषेण निरूप्यते रक्षणोपायसहितं कथ्यत इत्यर्थः ।

विवक्षितं धैर्यस्वरूपमाहुस्त्रिदुःखेत्यादि ।

त्रिदुःखसहनं धैर्यमामृतेः सर्वतः सदा ।

तक्रवद्देहवद्भाव्यं जडवद्गोपभार्यवत् ॥ ६ ॥

आमृतेः सर्वतः, "मृति" शब्दो मरणकाललक्षणः। "मृति" मनर्क मर्यादीकृत्य सर्वस्मात् सदा सर्वकाले त्रिदुःखसहनं श्रयाणामाधिदैविकादिभेदभिन्नानां कायिकादिभेदभिन्नानां कालकर्मस्वभावजानां "त्रैवर्गिकापायविघाते"ति तन्त्रवाक्यात् त्रिवर्गसम्बन्धावच्छिन्नानाञ्च सहनं यर्पणश्रुपेक्षणयप्रतीकारयुक्तोऽनुभवो धैर्यमित्यर्थः। ननु भगवदीयानामाधिदैविकादिदुःखसम्भावनैव नास्ति, यतः कालादयोपि न, तद्दुःखहेतवो भवन्ति इति कथं तत्सहनोक्तिः, इति चेत्—भगवता धैर्यपरीक्षार्थं कालाद्यस्तथा प्रेर्यन्ते, अतः पूर्वं भगवद्रूपादेव न मद्वित्तिस्ततस्तदाज्ञयाऽऽज्ञाभङ्गभयात्मद्वृत्तिरपि सम्भवति, यतो भगवतैवोच्यते "भयाद्वाति वातोयमि"त्यादि, श्रुतिश्च "भीषास्मादि"त्यादि। अयं न्यायः कालादावपि तुल्यः, भगवन्नियम्यत्वस्य तत्रापि समानत्वादिति। ननु भगवतः सर्वज्ञत्वेन परीक्षाकरणमपि न सम्भवति तत्कथं परीक्षार्थं तथा करणम्, किञ्च, परीक्षार्थं भक्तेषु दुःखं ददातीत्यपि नोचितमिति चेद्, अत्रापि वदामः। भगवति सर्वज्ञत्वादिधर्मास्तु ज्ञानादिमार्गे साधारणेच्छायां प्रकटाः। पुष्टिमार्गे विशेषरमणेच्छायां तद्रीत्यैव सर्वं करोतीति नानुपपत्तिः। यतः "स्वागतमि"त्यादिना अन्तरङ्गभक्तेष्वपि परीक्षैव कृता। द्वारकालीलायामपि "अव्यक्तलिङ्गं प्रकृतिष्वन्तःपुरगृहादिषु, क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सये"ति श्लोकरीत्यापि तथाकरणमुक्तम्। अपरञ्च, "मद्गम्यते न भासन्ति नाहं तेभ्यो मनागपी"ति भगवता भक्तिमार्गरीत्या भक्ताविरिक्ताज्ञानं स्वस्योक्तम्, तेन ज्ञायते भक्तिमार्गे लौकिकरीतिमेव भूयः प्रदर्शयतीत्यतोपि नानुपपत्तिः काचित्। किञ्च, दुःखदानस्यायुक्ततायामप्युच्यते। साक्षात्स्वरूपात्मकाभयदानार्थमेव धैर्यपरीक्षा क्रियते इति माताध्यापनार्थताडनवत्, पर्यवसानतः सुखरूपत्वमेवेतिनोक्तशङ्कालेशः। प्रकृतमनुसरामः। धैर्यस्वरूपमुक्त्वा दृष्टान्तपुरःसरं तद्रूपप्रकारमाहुस्तक्रवदित्यादि। भाव्यमित्यस्य पिण्डश्चान्वयः। तक्रवतो राजकलत्रस्य देहस्तक्रवदेहस्तेन तुल्यं स्वदेहादौ भाव्यमित्यर्थः। इयञ्चाख्यायिका—

"हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
देशान्तरे विधिवशाद्गणिकास्मि जाता।
पुत्रं पतिं समधिगम्य चितां प्रविष्टा
शोचामि गोपगृहिणी कथमद्य तक्रमि"ति

श्लोके प्रसिद्धा। तथा च, तया यथा स्वदेहादिपोषणसाधनीभूते तक्रे गते स्वदेहावस्थामनुसन्धाय शोकाभावपुरःसरमप्रतीकारेण दुःखमेव सोढं, तथा स्वस्याधि-

१ दुःखदाने समर्थाः, न भक्तावपकारस्येत्येव तथा, वेदरेणितिति तात्पर्यं, यत्नयासावसत्र भगवदीयत्वस्य तुल्यत्वात्। तत्र कथं त्रिदुःखसहनोक्तिरिति चेदं। इत्यधिकं क्वापि।

भौतिकलौकिकसाधनीभूतधनपुत्रादिगमनेपि शोकमकृत्वा अप्रतीकारेण दुःखसहनार्थं तथा भावनीयम् । वैष्णवत्वलाभानन्तरं तेषां हेयत्वैव यतः । अत एव निबन्धेपि श्रीमदाचार्यैः "प्रतिकूले गृहं त्यजेदि"त्यादिना त्याग एव तेषामुक्तः । अथवा दृष्टान्तद्वयमिदम् । तत्र पूर्वो व्याख्यातः । द्वितीयस्तु, देहः किमन्नदातुर्वा निषेक्तुर्मातुरेव वा ? मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोपि वे"ति देहः साधारणो नात्मीयस्तथा सर्वेपि तत्तद्देहसम्बन्धित्वात्साधारणा इत्येवं तदर्थमनुसन्धेयमित्यर्थः । भौतिककायिक-कर्मैश्वार्थिकदुःखसहने दृष्टान्त उक्तः । आध्यात्मिकसहने दृष्टान्तमाहुर्जडवदिति । यथा जडभरते मुक्तिसाधनसत्त्वेपि तेन पूर्वं मृगशरीरमासितमध्यं ततो भ्रातृमात्रादिकृतं भद्रकालिबलिदानभयपर्यन्तं, ततो रहूगणशिबिकावाहनसामयिकं सोढं, तथा आध्यात्मिककालज्वरादिदुःखं सोढुं, तद्वदाख्यम् । किञ्चैतद्देहानन्तरं * साक्षात्सेवोपयोगिदेहे वियोगादिदुःखेपि तत्सोढुं जडवदधुना भावनीयमित्यर्थः । किञ्च, भाव्यमित्यनेन अवश्यं भाव्यत्वमपि द्योत्यते । तेनाप्रतीकार्यत्वात्तन्निवारणार्थं यत्नो न कर्त्तव्य इत्यपि सूच्यते । आधिदैविकस्वाभाविकादिसहने दृष्टान्तमाहुर्गोपभार्यावदिति । भार्याणां समूहो भार्यम्, गोपानां भार्यं गोपभार्यं, तेन तुल्यं भाव्यम्, यथान्तर्गृहगतो गोपानां भार्यासमूहो भगवद्विरहेणाधिदुःखं सोढ्वा ततो ध्यानप्राप्तभगवत्सान्निध्यसुखमनुभूया-पुण्यपुण्योपरमे निर्गुणदेहेन भगवन्तं प्राप्तस्तथाहमपि भरत्यादिसम्भवमुभयं सोढ्वा प्राप्स्यामीति दुःखसहनार्थमनुसन्धेयम् । एवं प्राप्ते प्राधिरत्वनिरासाय समूहदृष्टान्त इति सर्वं सुस्थम् ॥ ६ ॥

अतः परं यदृच्छातः प्रतीकारोपस्थितौ यदि सहनाग्रहस्तदा विवेकहानिराग्रहश्च, यदि तूष्णीकत्वं तदा दुःखनिवृत्त्यसहनाभावेन धैर्यहानिराश्रयभङ्गश्चेत्युभयतः पाशायां रज्जौ समाधानार्थमाहुः प्रतीकार इत्यादि ।

प्रतीकारो यदृच्छातः सिद्धश्चेन्नाग्रही भवेत् ।
भार्यादीनां तथान्येषामसतश्चाक्रमं सहेत् ॥ ७ ॥

यदृच्छातो भगवदिच्छातः स्वकृतोपायं विनेति यावत् । आग्रहीति निन्दायामिनिः । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने, संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादय" इत्यभियुक्तोक्तेः । तथा च, भगवदिच्छया सिद्धे प्रतीकारे निन्दिताऽऽग्रहवान्न भवेत् । परमानाग्रहेऽभिमत्याभावाद्धैर्यस्य निवृत्तिर्भगवदिच्छानुसन्धानाद्विवेकस्य भङ्गः करणादाग्रहोऽप्यभङ्ग इति सर्वं सामञ्जस्यमिति भावः । यद्वा योग्यम् । अक्रमं दोष-

* [illegible] साक्षात्सेवोपयोगिदेह इति पाठान्तरम् ।

भार्यवत् प्रतीकारो यदृच्छातः सिद्ध्येच्चाग्रही भवेदिति । तथा च, यथा जडो भगवदिच्छया रहूगणेन संवदन् शिबिकावाहनार्थं नाग्रहवान् जातः । यथा च रासमण्डलमण्डनायितं गोपभार्यं वियोगतापे भगवदिच्छया गुणगानस्मरणरूपदर्शनादिरूपप्रतीकारोपस्थितौ भगवदिच्छानुरूपमेव व्यवहृतवत्, तथा स्वयमपि स्वाधिकारानुसारेणानाग्रही भवेदित्यर्थः । तत्समूहस्याऽनाग्रहोऽपि श्रीमदाचार्यैः "गत्या ललितयोदारे"त्यत्राभासे "यदा पुनरि"त्यारभ्य "स्वयमाविर्भूत"इत्यन्तेन "त्वयि धृतासव" इत्यत्र "त्वदर्थमेषे"त्यारभ्य "सदैव त्यक्षन्ती"त्यन्तेन, "दुस्त्यजस्तत्कथार्थ" इत्यत्र च स्फुटीकृतः । चेदित्यनेन तादृक्तापे शीघ्रं स्वाश्रयं दातुं प्रभुरेव प्रतीकारं सम्पादयति । न सम्पादयति चेदिति स्वयं तदर्थं न यतेत । तथा सति प्रभोरनभिप्रेतत्वेन कोपादेरपरीत्यापत्तिरित्यपि सूच्यते । अतः परं कायिकं रक्षासाधनमुपदिशन्ति भार्यादीनामित्यादि । भार्यादीनामिति तद्गुणसंविज्ञानो बहुव्रीहिः । तेन येऽत्यन्तस्वनियम्यास्तेषाम् । अन्येषां विभक्ताविभक्तबान्धवादीनामुदासीनानाञ्च, असतो दुर्जनस्य, "दुःसहमिदं मन्ये आत्मन्यसदतिक्रममि"ति वाक्याद् दुःसहत्वात्पृथग्निर्देशः । एतेषामाक्रमं तिरस्कारं सहेत । आक्रमपदस्य योगेन पादप्रहारपर्यन्तता बोध्यते । सहेदिति अनुदात्तेत्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । ब्रह्मचारिप्रभृतीनामन्येषामेकाकिनाञ्च भार्याद्यभावादुक्तत्र्यभावाच्च त्रितयनिर्देशः । तेषां सेवाप्रतिकूलत्वे त्यागरूपमेव सहनम् । स्वाविवेकमात्रप्रातिकूल्ये च तत्प्रतीकारेण तिरस्कारमर्पणमेव सहनं तदापरेदित्यर्थः । अत्रोपायो निबन्ध उपदिष्टः । "सर्वं सहेत परुषं सर्वेषां कृष्णभावनादि"ति । "एतदन्तः स्थितः कृष्ण एवास्मानुपदिशती"ति च व्याख्यातम् ॥ ७ ॥

एवमाक्रमसहनोपदेशो गृहस्थितिरागता । तथा सतीन्द्रियकार्यकरणमर्पाक्षिप्तं, तत्राऽऽसक्तौ न धैर्यस्वरूपस्य सामर्थ्यस्य वा नाश इति तन्निवृत्त्यर्थं साधनान्तरं रक्षणस्योपदिशन्ति स्वयमित्यादि ।

स्वयमिन्द्रियकार्याणि कायवाङ्मनसा त्यजेत् ।
अशूरेणापि कर्तव्यं स्वस्यासामर्थ्यभावनात् ॥ ८ ॥

स्वयमित्युभयत्र आग्रहेणेति यावत् । इन्द्रियकार्याणि ज्ञानक्रियाप्रधानान् भोगान् कायवाङ्मनसो कायवाग्भ्यां सहितं मनस्तेन सर्वात्मना त्यजेत् । क्रीडायामपि नाददीत, तेषामत्यन्तबाधकत्वादित्यर्थः । बाधकत्वञ्च, "विषयान्ध्यायतः पुंस" इत्यादिना गीतायां स्फुटमेव । कायेन त्यागो भोग्यानुपादानम् । वाचा त्यागः शुभा-

१ सर्वोऽपि द्वन्द्वो विभाषैकवत् ।

वक्ष्यामी"ति श्रुत्या स्वतः श्यामवर्णः पुरुषोत्तमो हरिः, ऐहिके एतज्जन्मसम्बन्धिकार्ये फलभोगे स्वमनोऽभिलषितसेवादिसाधने तत्सम्पादने च, परलोके एतज्जन्मान्तरभाविनि जन्मनि, चकारात्तत्र सुखदुःखफलभोगे भगवदिच्छानुरूपसत्त्वादिसाधने तत्सम्पादने सर्वथा "शरणं रक्षणे गेहे वध रक्षकयोरपी"ति कोशात् । तदस्ततः प्रमादादिभ्यो रक्षणात्मा, तत्र तत्र गेहात्मा, तत्तत्प्रतिबन्धनिवृत्त्यात्मा, तत्र तत्र ततस्ततो रक्षकश्च, स्वयमेवास्तीत्यनुसन्धानमाश्रय इत्यर्थः । तेनात्र चित्तस्यैवं भगवत्प्रवणत्वरूपसेवाविशेषात्मा स्वीकृतः । अन्यैरपि " मामाश्रित्य यतन्ति ये," मां हि पार्थ व्यपाश्रित्ये"त्यत्र चित्तसमाधानत्वेन इतरवैमुख्यपूर्वकशरणागतित्वेन आश्रयतया ग्रहणत्वेन व्याख्यातः । शरणागतिश्च रामानुजाचार्यैस्तमेव शरणं गच्छे"त्यत्रानुवर्तितत्वेन व्याख्यानात् । शङ्करभाष्ये तु " मामेकं शरणं व्रजे"त्यत्र भगवदनतिरिक्तानुसन्धानत्वेन व्याख्यातः । मधुसूदनीये तु "अस्यैवाहं" "ममैवायं" "स एवाहमि"ति त्रिधा, भगवच्छरणत्वं स्यात्साधनाभ्यासपाकत" इति भक्तिपूर्वकमेवमनुसन्धानत्वेन । अत्राप्येतदेव स्वीकृतम्, परन्तु, मायावादनिरासाद् ब्रह्मवादेनाऽविहितभक्तेराधिक्येन चेति विशेषः । एवं प्रकारेण सदा येषां भावो भवेत्तदा तेषां भगवता आश्रयो दत्त इति ज्ञातव्यम् । कदाचित्कदाचिद्विच्छेदे तु साधनावस्था, कदाचिद्भवनेऽप्यारम्भदशा, रक्षकत्वमात्रभाने त्वाश्रयस्य भावित्वमित्याद्युक्तम् । अयमेवाश्रयो भक्त्यधिकारिणां भक्तिं पोषयन्नुत्तमः । तां जनयन् भक्तिमार्गीयः जनयिष्यन् भक्तिमार्गानुकल्परूपः । एवमेव ज्ञानाधिकारिणां ज्ञानपोषणादि कुर्वन् तन्मार्गीयः । कर्मकल्पस्य वैराग्यस्य पोषणादिकं कुर्वंस्तन्मार्गीय इति ज्ञातव्यम् । एवं स्वरूपं निरूप्याश्रयलक्षणप्रकारमाहुः दुःखेत्यादि । एवं चित्ते सदा भाव्यमित्यादिना अभिप्रेणान्वयः । तथा च दुःखहान्यादौ हरिः सर्वथा शरणं भाव्य इत्यर्थादाधिके कर्मयोगे सिद्धे दुःखहानावित्यादौ कश्चित् कश्चिन्निमित्तात् कर्मयोग इत्यनेन सप्तमी । तेन दुःखहान्यर्थं शरणं गतस्य शरणदानाज्ञानजनितं जीवबुद्ध्या दुःखे, तद्धान्यर्थं तथेत्यर्थः । एवमग्रेऽपि । साम्प्रदायिकाभिमते विषयसमीपस्थे तु दुःखहानिविषये तथेत्यर्थः । एवमग्रेऽपि । दुःखनिवृत्तौ आश्रयविस्मरणाऽभावार्थमुपदेश इति श्रीरघुनाथचरणाः । भक्तिमार्गीयस्य सेवायां महत्तस्य दुःखप्रतीकाराकरणाद् दुःखहानौ धैर्येण चित्तोद्वेगादिसम्भवात् तदभावार्थं शरणभावनमेव कर्तव्यमित्येतदर्थमिति श्यामगोपीवराः । गोकुलोत्सवास्तु नात्र किमपि व्याचख्युः । एवं सर्वत्र तत्तद्धान्यादिविषयोऽप्यरेयः । तत्रापि भक्तिं पोषयन् सपरिकर आश्रयो गोपीशैर्विवृतः । भक्तिं जनयन् जनयिष्यंश्चेत्युभयविधः प्रकारभेदेन श्रीरघुनाथचरणैर्गोकुलोत्सवैश्च विवृतः । अत्र त्वाधुनिकानां श्रीमदाचार्यमार्गप्रविष्टानामपि स्वभावभेदेन तत्तद्विषयनात्तत्तदधिकारानुसारेण तत्फलसिद्ध्यर्थे सर्वप्रकारको दिग्मात्रं प्रदर्श्यत इति न कोऽपि क्वापि विरोधः । तथा

पाप इति । सेवादिप्रतिबन्धकपापे दैवाज्जाते वा भगवदपराधे चेत्यर्थः । भये, स्वस्य जीवस्य तुच्छत्वात्कथं ब्रह्मादिदुरापचरणरेणोः प्राप्तिरिति भये, भयान्तरे च । कामाद्यपूरणे, काम आद्यो येषां, तद्गुणसेवाविज्ञानः, अलौकिककाममुख्यामुख्यगुणज्ञानात्मकपोषाणां पूरणे पूर्त्यर्थं कामादेरपूरणे वा ॥ १० ॥

भक्तद्रोहे भक्त्यभावे भक्तैश्चातिक्रमे कृते ।
अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः ॥ ११ ॥

स्वस्य कामादिपूर्त्यै तस्या अन्यत्रादर्शने पश्चाद् अवज्ञायां, प्रकारान्तरेण वा द्रोहे, भक्तद्रोहापराधो मर्यादायामपि न दूरीकर्तुं शक्यते, यथा दुर्वाससोम्बरीषयोः विषये, किं पुनः पुष्टिमार्गे । अतस्तन्निवृत्त्यर्थमयमुपदेशः । स्वस्य, स्वीयानां चोत्कटानुत्कटभक्त्यनुत्पत्तौ दुःसङ्गादिना तन्नाशे च । भक्तैश्चातिक्रमे कृते तत्सहनार्थमयमुपदेशः । ते विना निमित्तं सर्वथा कमपि नातिक्रामन्ति । अपातिक्रामन्ति तदा स्वस्मिन्कोपि दोषोस्ति । ततस्तन्निवृत्त्यर्थमयमिति व्याख्यानोपीशाः । अशक्ये वा सुशक्ये, वा शब्दोप्यर्थः । स्वकृत्यसाध्ये स्वकृतिसाध्ये च सर्वथा व्याप्यव्यापककारेण कायवाङ्मनोभिर्वा सर्वदुःखहर्तैव शरणम् । सुशक्ये शरणोपदेशोऽहङ्काराभावार्थ इति भावः । एवं विशेषेणायं सर्वोप्युपदेशो विवेकाभावेपि आश्रयस्यासहायशूरत्वार्थ इति मम प्रतिभाति । धैर्याभावेपि तथात्वार्थमङ्गुरहङ्कारेत्यादि ।

अहङ्कारकृते चैव पोष्यपोषणरक्षणे ।
पोष्यातिक्रमणे चैव तथान्तेवास्यतिक्रमे ॥ १२ ॥

अहङ्कारकृते अभिमानेन कृते, तद्दोषनिवृत्त्यर्थमभिमाननिवृत्त्यर्थञ्चायमुपदेशः । चकारः सर्वत्रानुक्तसजातीयसमुच्चयार्थः । एवकार उपायान्तराद्युपदेशव्युदासार्थः । पोष्यपोषणरक्षणे सम्भावनेन तद्रक्षणस्य लौकिकत्वात्करणे स्वस्य सेवादिवियानादूरत्वे भगवत्पोष्याणां तेषामुभयसामञ्जस्यार्थमिदम् । पोषणविधावपि रक्षणविधायां ■ पोष्यातिक्रमणे । पोष्यैः सह निर्वेदितैः कृते, स्वयं वा तेषां कृतेऽतिक्रमणे आसुरं भावं विना तदभावात्तदपि तन्निवृत्त्यर्थं स्वस्यस्वन्यायार्थं चेदम् । तथान्तेवास्यतिक्रमे, अत्रापि तथा, । तस्मिन्स्वकृतोपकारानुसन्धानेन सर्वांशनिवृत्त्यभावादपि निवृत्त्यर्थं पृथगुपदेशः ॥ १२ ॥

---

१ कोऽपि पुरातनग्रन्थो नोक्तो देव तत् पोष्यपोषणस्य, अतस्तस्यौचित्योत्पत्तिविषयिणी सम्प्रत्ति, इत्यपि च ।

अलौकिकमनःसिद्धौ सर्वथा शरणं हरिः ।
एवं चित्ते सदा भाव्यं वाचा च परिकीर्तयेत् ॥ १३ ॥

अलौकिकमनः सिद्धौ, निमित्तसप्तमी। "मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च। अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितमि"ति श्रुतेः। कामसङ्कल्परहितमनःसिद्ध्यर्थं सेवाद्यर्थमनुकूलमनःसिद्ध्यर्थमित्यर्थः। सर्वार्थं पुष्ट्यादिमार्गीयसकलपुरुषार्थार्थम्, अतिदीनभावसिद्ध्यर्थोऽयमुपदेशः। शरणं हरिः व्याख्यानमेतत्। एवं विषयमुपदिश्य रक्षणप्रकारमाहुरेवमित्यादि। चित्ते भावनेन भगवानाश्रयं ददाति। क्षणमात्रमप्यातुरत्वेऽशाभावार्थं सदेति। वाचा परितः कीर्तनेन मार्गः प्रचलति। तेनोभयोपदेशः ॥ १४ ॥

कायिकमाहुरन्यस्येत्यादि।

अन्यस्य भजनं तत्र स्वतो गमनमेव च ।
प्रार्थनाः कार्यमात्रेऽपि तथान्यत्र विवर्जयेत् ॥ १४ ॥

अन्यस्य भगवदतिरिक्तस्य भजनं वर्जयेत्। अन्यं देवत्वेन कामपूरकत्वादिबुद्ध्या वा न सेवेत। तत्र स्वतो गमनमेव च, तत्स्थानभूते तत्र तत्समीपे स्वत उद्यम्य गमनञ्च वर्जयेदेव। "यावदन्याश्रयस्तावद्भगवानपि न तनुम्, निरीक्षयेन्न दयया ह्यनन्यजनवत्सल" इति वाक्यादन्याश्रये भगवानाश्रयमपि न दद्यादिति ज्ञापनार्थं चकारः। कौतुकार्थमप्यविशकालयापने नन्दग्रामस्योक्तत्वात्। मध्येमार्गं सामीप्ये जाते तद्दर्शनं न कुर्यात्, भगवत्सेवकत्वाज्जगत्त्वादिकं भावयेदित्यपि सूचितम्। प्रार्थनाः कार्यमात्रेऽपि वर्जयेत्। तेन कार्येऽप्यामोहे भगवति प्रार्थना कदाचित् सकृत्कुर्यादपीति सूच्यते। श्रीरघुनाथचरणैस्तु प्रार्थनापदं प्रथमान्तं प्रार्थैत्यध्याहृत्य व्याख्यातम्। "अप्रार्थितानि वस्तूनि या काचित्क्रियमारभते हरिम्। अप्रार्थितानि मर्यादस्तस्य तुष्यति केशव" इति विष्णुधर्मीयसङ्कटगीतावाक्येनोपष्टम्भश्च। तथा च प्रार्थनापदं विज्ञापनपरमिति तेषामाशयः। एवञ्च न पूर्वग्रन्थविरोधोपीति युक्ततरमेव वैविध्यम्। याचनक्रियायां साधारणकारणीभूतः कायादिव्यापारोऽयं ददात्वित्यभिसन्धिपूर्वको वा सः प्रार्थना। तदकारणपनयिषांहिन स्वज्ञातवस्तुस्वरूपस्य कथनं विज्ञापनमिति तयोः स्वरूपभेदाद्युचितं चैतत्। स्वाम्यधीनत्वदार्ढ्यं न विवेकोपष्टम्भात्। आज्ञाया विलम्बे धैर्यस्याप्युपष्टम्भादाश्रयदार्ढ्येन तस्य शीघ्रं स्वकार्यक्षमत्वसिद्धेरिति। तथान्यत्र विवर्जयेत्। यथा भगवति सकृत्प्रार्थनं सर्वविज्ञापनञ्च, तथेतरेषु विशेषेण वर्जयेत्, तदुभयमपि सर्वथा न कुर्यादित्यर्थः। मनसाप्यविचारणं वर्जने विशेषः। एवं कायिकमुपदिष्टम् ॥ १४ ॥

अतः परमेकः सर्वसिद्ध्यर्थं बाधकत्यागोऽवश्यं कर्तव्यस्तमाहुरविश्वास इति ।

अविश्वासो न कर्तव्यः सर्वथा बाधकस्तु सः ।
ब्रह्मास्त्रचातकौ भाव्यौ प्राप्तं सेवेत निर्ममः ॥ १५ ॥

"मदुक्तावि"ति शेषः । "आश्रय" इति वा । सर्वथेति, स्वरूपतः फलतश्च । तु पूर्वपक्षनिरासकः । "यस्य स्यादद्धा न विचिकित्सास्ती"ति श्रुतिम्, "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यती"त्यादिस्मृतिञ्च प्रमाणत्वेनाक्षिपति । तर्हि अविश्वासनापोपायो वक्तव्य इत्यत आहुः ब्रह्मास्त्रेत्यादि । ब्रह्मास्त्रं चातकश्चेत्युभौ अविश्वासस्य बाधकत्वे विश्वासस्य साधकत्वे च यथा यथं भाव्यौ चिन्तनीयौ, तयोर्वृत्तान्तः स्मर्तव्य इत्यर्थः । यथा लङ्कायां राक्षसैर्ब्रह्मास्त्रेण हनुमान् बद्धस्तत्परं बद्धं निश्चेष्टमालोक्य ते रज्जुभिर्बध्नुमारब्धवन्तस्तदा तेषां विश्वासाऽभावं दृष्ट्वा ब्रह्मास्त्रं ततो निर्गतं, हनुमान्मुक्तश्चासो रज्जुबन्धनानि बभञ्ज । तेन तेषां प्रयोगप्रयासो व्यर्थोऽभूत् । तथात्राविश्वासे भगवानपि त्यजति भक्तिमार्गे शरणमार्गे च प्रवृत्तिरपि तथा भवतीत्यविश्वासे दृष्टान्तः । चातकः पक्षिविशेषः, स च स्वातिबिन्दुप्राप्त्याशयावर्षपर्यन्तं, विश्वासेन तिष्ठति, तेन तस्य क्षेमं निर्वहति, पुनश्च स्वातौ पर्जन्यो वर्षत्येव । तथात्र श्रीमदाचार्योक्तौ विश्वासे, तथा भगवति मार्गे च विश्वासे सर्वं सिद्ध्यतीति विश्वासे दृष्टान्तः । तथा चाविश्वासं परित्यज्य विश्वासं कृत्वा प्राप्तं सेवेत निर्ममः, लौकिके ममतां परित्यज्य यदृच्छया प्राप्तं सुखं वा दुःखं वा तत्साधनं वाऽनुभवेत्त तत्राभिनिवेशेदित्यर्थः ॥ १५ ॥

अनभिनिवेशे लौकिकादिनिर्वाहप्रकारमाहुर्यथा कथञ्चिदित्यादि ।

यथाकथञ्चित्कार्याणि कुर्यादुच्चावचान्यपि ।
किं वा प्रोक्तेन बहुना शरणं भावयेद्धरिम् ॥ १६ ॥

उच्चानि सेवार्थानि, अवचानि लौकिकार्थानि, उभयान्युभयविधानि वा यथा कथञ्चित् कुर्यात् न तु ऋणादिना, नापि लौकिकप्रकारमार्गेणेत्यर्थः । यद्यपि कथञ्चिन्निर्वाहसम्भवे तत्राप्युपायमाहुः किं वेत्यादि । बहुना प्रोक्तेन किं, न हि पारन्तः प्रकाराः कालकर्मस्वभावप्रकर्षादिनिबन्धना आनन्त्याद्वक्तुं शक्यन्ते । तस्मादिष्टाप्रेक्षितेषु यः प्रतिविधानोपायः पूर्वमुक्तस्तमेव सर्वथानुसन्धानादिरूपेणानुसन्दधन् शरणं भावयेद्धरिमिति । "सर्वधर्मान्परित्यज्ये"त्यत्र "तमेव शरणं गच्छे"त्यत्र च भगवता गीतासु निर्धारितत्वाच्छरणागतेषु तेनैव निर्धारितप्रकारेषु सन्यासनिर्णयादिषु दर्शनादित्यर्थः । एतेनाज्ञाभावेऽप्याश्रयत्वमात्रवत्मा निर्धारिता ॥ १६ ॥

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तर्गतं-नवमं

# कृष्णाश्रयस्तोत्रम्

षड्भिष्टीकाभिः समलंकृतम्

१. श्रीरघुनाथानां विवरणम्
२. श्रीकल्याणरायाणां प्रकाशः
३. त्रिगृहश्रीगोविन्दराजभट्टानां प्रकाशटिप्पणम्
४. श्रीद्वारिकेश्वराणां विवृतिः
५. श्रीव्रजराजानां विवरणम्
६. केषाञ्चित् विवरणम्

श्रीमद्-वल्लभाचार्य-महाप्रभु-प्रवर्तित-शुद्धाद्वैत-सम्प्रदायस्य-सप्त-
पीठान्तर्गत-षष्ठ-पीठाधिष्ठित-गोस्वामि श्री १००८ श्री
श्रीव्रजरत्नलालजी — महाराजश्रीत्येतैः प्रकाशितम्



गोस्वामिश्री १००८ श्रीव्रजरत्नलालजी महाराज

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नम ॥

# ग्रन्थ--परिचय

कृष्णाश्रयस्तोत्रका प्रणयन अडैलमे श्रीमहाप्रभुने लाहोरके बूला मिश्रके लिए किया था यह उल्लेख चौरासी वैष्णवनकी ४६वी वार्ताके भावप्रकाशमे मिलता है इसका रचनाकाल वि स १५७० कहा जाता है [१]

बूला मिश्रका जन्म सारस्वत ब्राह्मणके घरमे हुआ था बूलाके पिता पुरोहिताईका काम करते थे -- परन्तु और किसी तरह पढे-लिखे नही थे बूला जब दस वर्षके हुए तो पिताने बुला कर कहा--"बेटा! तुम ब्राह्मणकुलमे जनमे हो. कुछ थोडा-बहुत शास्त्रोका अध्ययन करोगे तो सम्मानपूर्ण जीवन जी पाओगे अन्यथा मेरी तरह अनपढ ही रह जाओगे"

पिताने जिस पण्डितजीके पास अपने पुत्रको विद्योपार्जनके लिए भेजा वह पूरा 'लाभपूजापरायण' पण्डित था चेला पटते देखकर बोला-- "अच्छी तरह पढना हो तो पहले पाच-दस रुपया भेंटके रूपमे लाकर मेरी पूजा-भक्ति करो!' (पाच-दस रुपया आजसे पाच सौ वर्ष पूर्व बहुत महगा था)

बूला मिश्र घबरा गये. भागकर घर आ गये मोहे तानकर पिताने पूछा-- "क्यो लौटकर घर आगये न? अरे, यहा घरमे पडे रहे तो औरतोका काम चूल्हा फूकना ही सिर्फ सीख पाओगे क्यो गुरुजीके घरम रहनेमे क्या लज्जा आती है?" बूला बोल--"अरे, यह पण्डितजी तो पढानेसे पहले ही गुरुदक्षिणा माग रहे है! और यहा तो किसीके भी पास जाऊ, गति यही होगी सो मै तो काशी जाऊगा पढने." बूलाके पिताजीने ताना कसा-- 'घरके बाहर निकलनेकी हिम्मत है नही और बेटा काशी पढने जायेगा!"

ठेस लग गयी इस बातसे बूलाके मनपर. बूलाने अपने पिताजीके पैर छुए और घरसे बाहर निकल गये भीख मागकर पेट भरते हुए किसी तरह काशी पहुचे वहा भी भिक्षावृत्तिके अलावा कोई चारा न था पर एक पण्डितजीने पढानेकी दयालुता बूलाको दिखलाई बूलाके कठोर परिश्रमके बावजूद भी तीन वर्षकी अवधिमे कोई विशेष विद्यार्जन हो नहीं पाया होना हो निराश

---

१ श्रीनागरदास बोमणिया--लिखित लेख वैष्णववाणी म ६ ४ वर्ष १९७९

हो गये, अध्यापक भी और विद्यार्थी भी एक रोज पण्डितजीने साफ-साफ कह ही दिया—"बूला ! तुम्हारे भाग्यमे सरस्वती नही है. व्यर्थ परिश्रम क्यो करते हो ?"

बेचारे बूला मिश्र खिन्न हो गये. पण्डितजीकी पाठशालासे निकलकर शहरके बाहर गगाके तटपर अन्न-जलका त्यागकर बैठ गये ब्राह्मणोचित महत्त्वाकाक्षाको लिये हुए एक ब्राह्मणबालक काशीमे तीन वर्षतक रहकर भी विद्यार्जन न कर पाये तो दूसरा मार्ग और क्या हो सकता था? बूलाने सोचा कि या तो इस तपस्यासे सरस्वती प्रसन्न होगी, नही तो फिर इसी तरह प्राण-त्याग देना उचित है तीन दिन बाद सरस्वतीकी वाणी सुनायी दी कि सब कुछ भगवदिच्छाके अनुसार होता है भगवदिच्छा होनेपर चाण्डाल भी विद्वान् हो सकता है और भगवदिच्छा न होनेपर ब्राह्मण भी मूर्ख ही रह जाते है

'विवेकस्तु हरि सर्वं निजेच्छात करिष्यति"
"प्राकृता सकला देवा गणितानन्दक बृहत्,
पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्मम"

बूला मिश्रके भीतर विवेक तो जागा परन्तु धैर्य छूट गया बूलाने सोचा कि यदि सब कुछ भगवदिच्छाके अनुसार ही होता हो तो भगवान्‌की इच्छाको बदलनेके लिए भगवान्‌के नामपर ही भूखहड़ताल करनी चाहिये ! ऐसा विचारकर बूला "विष्णु विष्णु विष्णु" जप करते हुए भूखे प्यासे बैठे रहे अधीर होकर ही सही पर भगवन्नाम लेनेपर बूला मिश्रको भगवत्साक्षात्कार हुआ और श्रीमहाप्रभुके पास अडल जानेकी भगवदाज्ञा भी हुई. बूला मिश्र भगवदाज्ञा पाकर अड़ेल पहुचे श्रीमहाप्रभुने इनका स्वागत किया और कहा "बूला ! तुम धन्य हो तुमने भगवद्दर्शन पाये !" बूला मिश्रने सविनय निवेदन किया—"महाराज ! भगवत्साक्षात्कार आपकी कृपाका फल है परन्तु भगवद्दर्शन होनेके बावजूद भगवत्स्वरूपानन्दका अनुभव मुझे नही हुआ !" श्रीमहाप्रभुने समझाना चाहा—"एकबार भी भगवत्साक्षात्कार हो जानेपर सासारिक मोहके बन्धनका भय नही रह जाता, जीव मुक्त हो जाता है' इसपर बूला मिश्रने विनती की—'महाराज! मुझे मुक्ति नही चाहिये—भक्ति चाहिये अत कृपाकर आप अपनी शरणमें मुझे लें।"

श्रीमहाप्रभुने प्रसन्न होकर बूला मिश्रको यमुनाजीमे स्नान करनेकी

आज्ञा दी और पश्चात् अष्टाक्षर तथा ब्रह्मसम्बन्ध का दान दिया. समग्र शास्त्रोंके गुह्यतम रहस्यके उपदेश तथा मानसीसेवोपयोगी मनकी सिद्धि के लिए श्रीमहाप्रभुने कृष्णाश्रयस्तोत्रकी रचना की और उसे बूला मिश्रको पढाया

'आश्रय' शब्दके दो अर्थ होते हैं : १) सहारा देनेवाला २) सहारा लेनेकी क्रिया. अतएव विवेकधर्याश्रय ग्रन्थमें जब--"श्रीहरिके आश्रयसे सारे असाध्य कार्य भी सिद्ध हो जाते हैं (अशक्ये हरिरेवास्ति सर्वमाश्रयतो भवेद्)" कहा तो वहा 'आश्रय' का अर्थ शरणागति या सहारा लेनेकी क्रिया है. इसी तरह भागवतके द्वितीयस्कन्धके -- "जगत्के उत्पत्ति एवम् प्रलय के कर्ता तथा उपादान रूप परब्रह्मको 'आश्रय' कहा जाता है (आभासश्च निरोधश्च यतश्चाध्यवसीयते स आश्रय पर ब्रह्म परमात्मेति शब्दयते )" इस वचनमे 'आश्रय' शब्द आधार या सहारा बननेवालेके अर्थमें प्रयुक्त हुआ है. 'आश्रय' शब्दके इन दोनो अर्थोंको लेकर ही "कृष्ण एव गतिर्मम" में 'गति' शब्द प्रयुक्त हुआ है. अर्थात् भगवान् ही साधन हैं और भगवान् ही फल भी --भगवान् ही मार्ग हैं और गन्तव्य भी-- भगवान् श्रीकृष्ण सभी अर्थोंमे हमारे आधार --आश्रय--गति हैं. अतएव "कृष्ण एव गतिर्मम" का अर्थ -- कृष्ण ही हमारे आश्रय हैं और कृष्णका ही हमे आश्रय लेना चाहिये--दोनो तरहसे लिया जा सकता है.

इस जगत्में अनेक प्रकारकी जीवात्मायें हैं कुछ जीवात्माओमे लौकिक फलोंकी प्राप्तिके लिए लौकिक साधनोके आश्रयकी वृत्ति प्रबल होती हैं प्रवाही जीवात्माओंका यह प्रमुख स्वभाव होता है. कुछ जीवात्माओमें वेदादि--शास्त्रीय फलोंकी प्राप्तिके लिए केवल शास्त्रीय साधनोंके ही आश्रयकी वृत्ति प्रबल होती है मर्यादामार्गके अन्तर्गत कर्ममार्गीय जीवोंमे यह स्वभाव बलवान् होता है कुछ वैदिक फलोंकी प्राप्तिके लिए वैदिक साधनोंके साथ-साथ भगवान्को भी आश्रयके रूपमे अपनाते हैं मर्यादामार्गके अन्तर्गत ज्ञानमार्गीय उपासनामार्गीय तथा मर्यादाभक्तिमार्गीय साधकोमे यह स्वभाव पाया जाता है कुछ जीवात्माओंको भगवान्के अलावा अन्य किसी फलकी कामना होती नही है अत वे साधनके रूपमें भी केवल हरिका आश्रय स्वीकारते हैं ऐसे जीवोको पुष्टिजीव समझना चाहिये ( दृष्टव्य भागवतार्थ-निबन्ध ५-६/१२ ). अतएव "कृष्ण एव गतिर्मम" मनोभाव पुष्टिजीवका परम लक्षण है

भागवतके बारहवें स्कन्धका वर्ण्य-विषय भी आश्रयलीला ही है. भागवतार्थ-निबन्धमें 'आश्रय' शब्दके अनेक अर्थ दिखलाये गये हैं.

यथा—भागवतके द्वितीय स्कन्धसे लेकर ग्यारहवें स्कन्धतक भगवान्की जिन सर्ग विसर्ग स्थान पोषण ऊति मन्वन्तर ईशानुकथा निरोध और मुक्ति रूप लीलाओंका वर्णन किया गया है, उन लीलाओंके कर्ता-आश्रय एकमात्र श्रीकृष्ण ही हैं. ये नवविध लीलायें लक्षण हैं और इनसे लक्षित लक्ष्य-आश्रय एकमात्र श्रीकृष्ण ही हैं. इन नवविध लीलाओंका वर्णन भागवतकारने इसी हेतुसे किया है कि जिन-जिन विभूतिरूपोंको धारण कर सर्गलीलासे लेकर ईशानुकथातक की लीलायें भगवान् करते हैं उन सभी रूपोंके साथ भगवान्का कार्य-कारणरूप शुद्धाद्वैतरूप सम्बन्ध है. अर्थात् एक ही ब्रह्मका नाम-रूपमें विस्तार यह समग्र ब्रह्माण्ड है ( सर्वं खलु इदं ब्रह्म). कार्यरूप सभी लौकिक या अलौकिक विभूतिनामों तथा विभूतिरूपों को धारण करनेवाला कारणरूप परमात्मा एक ही है, ऐसा शुद्धाद्वैत-बुद्धिसे समझना आवश्यक है. हृदयसे स्नेह या आश्रय किन्तु विभूतिनाम अथवा विभूतिरूप का नहीं प्रत्युत मूलरूप श्रीकृष्णके ही नाम-रूपका होना चाहिये (ब्रह्मरूपं जगत् ज्ञातव्यं ब्रह्म जगतोतिरिच्यते इति न तथाश्रित कर्तव्या). अतः प्रथमस्कन्धसे लेकर नवम स्कन्धतक वर्णित लीलायें अन्याश्रय छुडानेके लिए हैं तथा दशम स्कन्धसे लेकर द्वादश स्कन्धतक की लीलायें कृष्णाश्रयके दृढीकरणार्थ हैं. हमने कह दिया है कि द्वादश स्कन्धका मुख्य वर्ण्य-विषय आश्रयलीला है. भागवतार्थ निबन्धके द्वादशस्कन्धार्थ-प्रकरणमें श्रीमहाप्रभु कहते हैं— "कृष्ण एवाश्रयो मतः" यही वाक्य इस कृष्णाश्रयस्तोत्रमें "कृष्ण एव गतिर्मम" के रूपमें रखा गया है

एवकार इतरव्यावर्तक माना जाता है श्रीकृष्णके मूलरूपके अलावा अन्य सारे विभूतिरूप—लौकिक हो या अलौकिक—जड हो या चेतन—देव दानव मानव पशु पक्षी इत्यादि सभी रूपोंको भक्तिमार्गीय एवम् प्रपत्तिमार्गीय आश्रयके दृष्टिकोणसे इतर माना जाता है. ज्ञानमार्गीय दृष्टिकोणसे शुद्धाद्वैतवादके अनुसार ये सर्वथा अभिन्न ही है परन्तु इस अभेदबुद्धिसे ये विभूतिरूप आश्रयणीय नहीं किन्तु केवल ज्ञातव्य हैं अतएव सभी विभूतिरूप एवकारद्वारा व्यावर्तनीय माने जाते हैं. इस "कृष्ण एव गतिर्मम" के एवकारको ही

व्याख्या श्रीमहाप्रभुने– "अन्यस्य भजन तत्र स्वतो गमनमेव च, प्रार्थना कार्यमात्रेपि ततोन्यत्र विवर्जयेत्." इस विवेकधैर्याश्रयकी कारिकामें दी है

अन्याश्रय-रहित केवल श्रीकृष्णका आश्रय ही उचित है, यह दिखलाने के लिए अन्योंके आश्रयकी विफलताका बोध आवश्यक है. तदनुसार इस स्तोत्रके प्रथम तीन श्लोकोमें लोकाश्रयकी विफलताका निरूपण किया गया है तथा द्वितीय तीन श्लोकोमें धर्माश्रयकी विफलताका तृतीय तीन श्लोकोमें कृष्णाश्रयकी महत्ताका निरूपण क्रमशः कर्ममार्गीय ज्ञानमार्गीय तथा भक्तिमार्गीय दृष्टिकोणसे किया गया है अन्तिम दो श्लोकोमें पृथक्शरण-मार्ग अथवा प्रपत्तिमार्गके उपदेशद्वारा गीताकी तरह श्रीमहाप्रभुने भी सम्पूर्ण निर्भयताका वरदान दिया है

एक अन्य रीतिसे प्रारम्भके छह श्लोकोंमें काल देश द्रव्य कर्ता मन्त्र तथा कर्म जो धर्मके आवश्यक छह अंग हैं, उनकी विफलता दिखलाते हुए, द्वादश स्कन्धके वर्ण्य-विषय पञ्चविध आश्रय – कृष्णाश्रय जगदाश्रय वेदाश्रय भक्ति-आश्रय तथा भागवताश्रय–के अनुरूप पाच श्लोकोमें भगवदाश्रयकी महत्ताका निरूपण किया गया है.

एक तृतीय रीतिसे देखनेपर प्रारम्भके नौ श्लोकोमें नवविध लीलार्थ गृहीत विभूतिरूपोंका अन्याश्रय छुडानेके लिए नौ श्लोकोंमें–"कृष्ण एव गतिर्मम" कहकर इतराश्रयका वारण किया है तथा दसवें श्लोकमें कृष्णाश्रयको सुदृढ किया गया है. ग्यारहवें श्लोकमें इस कृष्णाश्रयस्तोत्रकी फलश्रुति कही गयी है.

इस एक ही स्तोत्रमें वाक्पति श्रीमहाप्रभुने अनेक विवक्षाओंसे अनेकधा कृष्णाश्रयका निरूपण बूला मिश्रको समझाया है.

१) कलियुगके कारण धर्मानुष्ठानमें भी या तो आंतरिक दुराशयकी प्रचुरता ही सर्वत्र दिखलायी देती है, या फिर ईश्वर-भजन-विरोधी उपधर्मो अनीश्वरवादी ज्ञान वैराग्य अहिंसा दया लोकोपकार इत्यादि – के पाषण्डका ही प्रचुर प्रचार दिखलायी देता है इससे भगवत्प्राप्तिके कर्म ज्ञान और भक्ति मार्ग अवरुद्ध हो गये हैं. तथापि जिन्हें साधन और फलके रूपमें एकमात्र श्रीकृष्णका ही आश्रय है उन्हे किसी तरहका भय नहीं रह जाता. अतः इस कलियुगमें एकमात्र श्रीकृष्ण ही गति हैं.

२) सारा देश तामसी म्लेच्छ शक्तियोंसे आक्रान्त हो गया है लोभ-लालच कामुकता-व्यभिचार लूट खसोट हिंसा-अत्याचार जैसे पापोंके अनैतिक अड्डे ही सर्वत्र चल निकले है स्वधर्म-पालनका जो थोड़ा-बहुत प्रयास करते भी है उन्हे अनेकविध पीडा और क्लेशो से सन्त्रस्त किया जाता है ऐसी स्थितिमे सज्जनोंका व्यग्र हो जाना स्वाभाविक बात है ऐसी स्थितिका सामना करनेके लिए केवल श्रीकृष्ण ही हमारे सम्बल हो सकते हैं

३) सभी पवित्रस्थल मन्दिर आश्रम वन पर्वत सरोवर गंगा आदि तीर्थ, धनलोलुप तथा दुष्कर्म-निरत धर्मध्वजी उपदेशक पण्डा पुजारी पुरोहितों से घिर गये है अत इन पवित्र स्थलोका जैसा आधिदैविक प्रभाव प्रकट होना चाहिये वह दिखलायी नही देता परन्तु जिन भक्तोंमे श्रीकृष्णकी लालसा है उनकी कभी दुर्गति नही होगी

४) कर्ता धर्मका चतुर्थ अंग माना जाता है. वर्तमान युगमे धर्म-भावनासे धर्मानुष्ठान करनेवाले कर्ता दुर्लभ हो गये हैं. सारे धार्मिक अनुष्ठान पण्डित-म्मन्य लोगोद्वारा राजसी-तामसी प्रकृतिके म्लेच्छोंके अनुसरण और अनुकरण मे रूपमे किये जा रहे हैं और तिसपर भी धन और यश की लोलुपता ही इनका मुख्य हेतु होता है फिर भी बुद्धिप्रेरक श्रीकृष्णके चरणारविन्दोंका जिन्हे आश्रय है उन्हें ऐसी क्षुद्र लालसाओंसे श्रीकृष्ण ही बचायेगें

५) धर्मके पांचवे आवश्यक अंग मन्त्रोंमे भी अब वह प्रभाव नही रह गया है किसी योग्य अधिकारी गुरुके समक्ष प्रणिपात परिप्रश्न और परिचर्या की शास्त्रीय विधिके अनुसार तत्तद् मन्त्रोंके विभिन्न न्यास तात्पर्य और विनियोग के परिज्ञान तथा मन्त्रार्थ अपेक्षित व्रत एवम् शुद्धि के पालनपूर्वक दीक्षाग्रहण करनेसे मन्त्रोंमे प्रभाव उत्पन्न होता है इसके विपरीत आजकल अयोग्य-अनधिकारी व्यक्तियोंसे अशास्त्रीय विधिसे न्यासादिके परिज्ञानके बिना तथा मन्त्रार्थ अपेक्षित व्रतादि शुद्धिके बिना ही मन्त्रग्रहणकी रीति चल पड़ी है अत मन्त्रकी आधिदैविक प्रभावशक्ति तिरोहित हुयायी है. फलत सभी मन्त्र प्रभावहीन और निष्फल हो गये हैं परन्तु श्रीकृष्ण तो मन्त्रशक्तिके अधीन नही हैं. प्रत्युत सभी मन्त्रशक्तियां श्रीकृष्णके अधीन हैं अत श्रीकृष्णका ही आश्रय लेना चाहिये

६) धर्मके छठे आवश्यक अंग कर्मका भी स्वरूप भ्रष्ट हो गया है. क्योंकि जगत्मे अनेक प्रकारके वाद चल निकले है जो कर्म शास्त्रदृष्टया आवश्यक होते है उन्हे ये वाद निरर्थक मान लेते है. जो कर्म शास्त्रीय दृष्टिसे बहुत आवश्यक नही होते उन्हे ये वाद अनिवार्य सिद्ध करते है. जो वाद शास्त्रोका प्रामाण्य मानते है वे भी अर्थश्रद्धासे शास्त्रोके मन कल्पित अर्थ निकाल लेते है शास्त्रोके इस तरहके अन्यथा व्याख्यानके कारण भ्रान्त अनुयायी शास्त्रीय कर्मोका अनुष्ठान भी अन्यथा रीतिसे करने लग जाते है. जैसे अकरणसे कर्मोका स्वरूपत नाश होता है वैसे ही अन्यथाकरणसे कर्मोका फलत. नाश होता है. प्राय यथाविधि कर्मोका अनुष्ठान करनेवाले भी केवल दुनियाको दिखानेके लिए कर्मानुष्ठानका पापण्ड ही करते है अतएव कर्मोका प्रभाव ही क्षीण हो गया है फिर भी अन्याश्रय-दोषरहित होकर श्रीकृष्णमे आश्रयभाव रखना कभी निष्फल नही जाता अत कृष्ण ही अब केवल आश्रयणीय रह गये है.

इस तरह प्रथम तीन श्लोकोमे लोकनाश एवम् द्वितीय तीन श्लोकोमे धर्मनाशके निरूपणके बाद, अब जैसे कि भागवतके बारहवें स्कन्धमे पञ्चविध आश्रयका निरूपण माना गया है, तदनुसार श्रीकृष्णकी आश्रयरूपताका भी पाच ही श्लोकोमे वर्णन किया गया है सातवे श्लोकमे कर्ममार्गीय दृष्टिकोणसे, आठवे श्लोकमे ज्ञानमार्गीय दृष्टिकोणसे, नौमे श्लोकमे भक्तिमार्गीय दृष्टिकोणसे तथा दसवें-ग्यारहवे श्लोकमे प्रपत्तिमार्गीय दृष्टिकोणसे भी एकमात्र श्रीकृष्ण ही आश्रयणीय है, यह दिखलाया जा रहा है

७) कृष्ण सर्वोद्धारक है अत सुसाधन नि.साधन एवम् दुष्टसाधन जीवोका भी उद्धार करनेमे समर्थ है अजामिलका उपाख्यान भागवतके छठे स्कन्धमे उपलब्ध होता है.कि कैसे-कैसे निन्दित कर्मोमे निरत होनेपर भी भगवदनुग्रहवशात् उसके सारे कर्मदोष बिना नरकयातनाके ही नष्ट हो गये अत कर्ममार्गीय दृष्टिसे केवल श्रीकृष्ण ही आश्रयणीय है,अजामिलके प्रसगमे जैसे भगवान्ने स्वयम्के नामका माहात्म्य प्रकट किया इसी तरह श्रीकृष्णके ध्यान अर्चन आदिका भी माहात्म्य वहा दिखलाया गया है मूलत कृपा ही साधन है. बाकी उद्धारका व्यापार या व्याज तो भगवान् शास्त्रत विहित अविहित या निषिद्ध कर्मोको भी बना सकते है श्रीकृष्णका यही तो माहात्म्य है कि वे

एवं सदा स्म कर्तव्यं स्वयमेव करिष्यति ।
प्रभुः सर्वसमर्थो हि तेन निश्चिन्ततां व्रजेत् ॥ २ ॥

एवमनेन प्रकारेण स्त्रियः स्वपतिभजनवत्सदा निरन्तरं दैवजीवैः सद्भिर्येत्कर्तव्यं तदस्माभिरुक्तम् । दैवजीवानां सतां सत्पुरुषाणां सम्बन्धी कर्तव्यो यो भगवद्भजनरूपो धर्मः सोऽस्माभिरुक्तः । स्म इति प्रसिद्धिः । दैवजीवानामेवायं धर्मो, नत्वासुरजीवानाम् । आसुरावेशिनां तु व्यभिचारिणीनामिवान्यधर्मेष्वपि प्रवृत्तिः । दैवजीवानां तु गृहाश्रमिणां श्रौतस्मार्तादिकर्मानुष्ठाने वेदरूपभगवदाज्ञया देवतान्तरयजने क्रियमाणे भगवदङ्गत्वेन तद्विभूतित्वेन यागकरणस्योक्तत्वान्नानन्यत्वभङ्ग इति । तथा च 'अनन्याश्चिन्तयन्तो मामि'तिवाक्यायोगक्षेमनिर्वाहकत्वं भगवत एवेति यद्धर्मादिभिरैहिकामुष्मिकफलादिकं तदनायासेन भगवान्स्वयमेव करिष्यति सम्पादयिष्यति । कुत इत्यपेक्षायामाहुः—प्रभुरिति । सर्वेषां ब्रह्मेन्द्ररुद्रादीनामपि प्रभुः स्वामी नियामकः सर्वसामर्थ्यविशिष्टः । सर्वैर्मिलित्वा यत्कर्तव्यं तत्स्वयमेव कर्तुं समर्थः । हीति प्रसिद्धिः, क्षीरोदमथने मन्दरानयने । तेन सर्वप्रकारेण देशकालद्रव्यकर्तृमन्त्रकर्माद्याग्रहं परित्यज्य चतुर्विधपुरुषार्थरूपो भगवानेवेति भगवदाश्रयेण भगवद्भजनमेव कुर्वाणो निश्चिन्ततां व्रजेत् । तेन दैवजीवैर्भगवदाश्रितैः कदापि क्वापि चिन्ता न कार्या । चिन्ताया आसुरधर्मत्वात् । सर्वं भगवानेव करिष्यतीति भावः ॥ २ ॥

ननु लौकिकवैदिकधर्माद्याश्रयपरित्यागेन भगवद्भजने क्रियमाणे कदाचिद्भगवानप्येतन्मनोरथं न कुर्यात्तदा किं भविष्यतीत्यपेक्षायामाहुः—यदीति ।

यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ।
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥

यदि कदाचिच्छ्रीगोकुलस्यानन्यशरणस्यानन्यगतिकस्य 'तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रह'मित्येवं भगवता श्रीनन्दनन्दनेनाङ्गीकृतस्य निरस्तसाधनस्याधीशोऽधिपतिः स्वामी रक्षकः फलात्मा पालकश्च, सर्वात्मना कायवाङ्मनसा सर्वात्मभावेन वा हृदये धृतो धारितः । येषां भगवन्तं विहाय दारागारसुतधनादिकं किमपि प्रियं नास्त्येव सर्वस्वरूपेण भगवानेव येषामस्ति, भगवदर्थमेव यैः सर्वं त्यक्तं, येषां प्राणादयोऽपि भगवदर्थमेव प्रिया नात्मार्थम् । यदीतिपदादेतादृशवत्ता दुर्लभेति सूचितम् । भगवद्रूपातिरिक्तसाधनासाध्येति भावः । गोकुलाधीश इतिपदेन यथा श्रीगोकुले भक्तवश्यत्वेन भगवता स्थीयते तथैतस्यापि वशो भूत्वा भगवान् वर्तेत इति द्योतितम् । अत एव 'एवं सन्दर्शिता ह्यङ्ग हरिणा भृत्यवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे', 'नायं सुखापो भगवान्देहिनां गोपिकासुतः । ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह'

ति । नन्वेवं भगवति हृदि विद्यमाने गृहस्थानां धनाद्यभावाल्लौकिकवैदिककार्यादेः कथं निर्वाह इत्यपेक्षायामाहुः—तत इति । यदा श्रीभगवानेव सर्वसामर्थ्यविशिष्टो हृदये स्थितस्तदा लौकिकैर्व्यवहारादिकर्मभिर्वैदिकैराश्रमवर्णादिविहितैः कर्मभिर्यागदानादिभिश्चैतस्य किं फलमन्यत्? न किञ्चिदपीत्यर्थः। सर्वस्यैव ब्रह्मलोकपर्यन्तस्यापि फलं 'स्याब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने'तिवाक्यान्नश्वरत्वमेवेति न किञ्चिदित्यर्थः । ततस्तस्मादपरं किं फलमिति त्वमेव ब्रूहि। यतो येषां सर्वभावेन भगवानेव हृदि स्थितस्तेषामैहिकं पारलौकिकं सर्वं भगवानेव करोति 'तेषामहं समुद्धर्ते'तिवाक्यात् । 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामी'ति वाक्याच्च ॥ ३ ॥

ननु तर्हि जीवैः सदा किं कर्त्तव्यमित्यपेक्षायामाहुः—अत इति ।

अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः ।

स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

यतः कर्मयोगज्ञानादिसाध्यं फलं तद्भक्तेरानुषङ्गिकमतः सर्वात्मना सर्वप्रकारेण शश्वन्निरन्तरं गोकुलेश्वरस्य निस्साधनफलात्मनो भक्तवश्यस्य परब्रह्मणो रसात्मकस्य भगवतः पादयोश्चरणारविन्दयोः स्मरणं भजनं चकाराच्छ्रवणं कीर्त्तनं कदापि न त्याज्यम् । स्नेहाभावेपि मनोधर्मत्वात्स्मरणस्य मुख्यतया स्मरणमेवोक्तम् । अत एव 'तस्माद्भारत सर्वात्मे'त्यस्य व्याख्याने श्रवणकीर्त्तनस्मरणानामेवोक्तौ कथं नवधा भक्तिर्नोक्तेति स्वयमेवाशङ्क्य समाहितम् । पादसेवनादारभ्यात्मनिवेदनपर्यन्तानां षण्णां प्रेमोत्तरभावित्वान्मुख्यतया श्रवणकीर्त्तनस्मरणमेवाभिहितम् । तस्मादहर्निशं स्मरणं कर्त्तव्यं लीलाविशिष्टस्य । रासादिलीला अपि सर्वाश्चिन्तनीया भावाविष्टतया । तथैव भजनं सेवनं कर्त्तव्यं, कदापि न त्याज्यम् । 'कृष्णसेवा सदा कार्ये'तिवाक्ये मानस्या एव फलरूपत्वमुक्तम् । अत एव सेवालक्षणं चेतसो भगवत्प्रवणत्वम् । भगवत्प्रवणचित्तसिद्ध्यर्थं तनुवित्तजा सेवा । तेन सेवाकरणेन संसारदुःखनिवृत्तिपूर्वकब्रह्मज्ञानाद्यवाप्तिरवान्तरफलम् । परमफलं तु यथाधिकारतो भगवदनुग्रहेण नित्यलीलाप्राप्तिरेवेति मे मम मतिरिति ।

श्रीमदाचार्यकृपया व्याख्या सर्वार्थबोधिका ।
मया कृता चतुःश्लोक्याः कृष्णरायाभिधेन हि ॥ १ ॥
तुष्यतां तेन भगवाञ्श्रीमदाचार्यवल्लभः ।
दासे निस्साधने दीने कृष्णराये दयानिधिः ॥ २ ॥

इति श्रीमद्वल्लभदेवविरचितायाश्चतुःश्लोक्याः कृष्णरायभट्टविरचिता सर्वार्थबोधिका व्याख्या

सम्पूर्णा ।

---

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# चतुःश्लोकी।

## मठेशश्रीनाथभट्टकृतटीकया संवलिता

श्रीवल्लभाभिधानौमि तान् स्वाचार्यान् मुदा।
उपदिष्टा चतुःश्लोकी स्वीयेभ्यो यैः समासतः॥ १॥

अथ श्रीवल्लभाचार्यचरणाः स्वीयजनानां सुग्रहार्थं समासतः स्वात्मधर्ममनुशिक्षयन्तश्चतुःश्लोक्या सर्वशास्त्रार्थं निरूपयन्ति सर्वदा सर्वभावेन भजनीय इति।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन॥ १॥

परमेश्वरो देवः सेव्य इति सर्वशास्त्रार्थः। स च केषाञ्चिन्मते निराकारः, केषाञ्चिन्मते साकार उपास्यः। तत्र निराकारस्तु नोपपन्न एव। तथा हि, किमाकारो देह आत्मा वेति विचारणीयम्। तत्र देहस्तु पाञ्चभौतिकः प्राकृतः स नोपपद्यत एव, 'देहेन्द्रियासुहीनाना'मितिवाक्यात्तदीयानां पार्षदानां यत्र तथात्वं तत्र तत्प्रभुस्वामिनः परस्य ब्रह्मणः पुरुषोत्तमस्य तथात्वे किमु वाच्यमिति कैमुतिकन्यायः। अत एव आत्मैव परः स तथाभूतो दिव्यः स्वीकार्यः। न च दिव्यपदवाच्यो देह एव तदाकारः स्वीकार्य इति वाच्यं, देहदेहिविभागाभावात्। 'स यथा सैन्धवघन अान्तरो बाह्यः कृत्स्नो रसघन, एवं वाऽरेऽयमात्मे' त्यादिश्रुतिभिरनाहतत्वात्। दिव्यपदेन दिवि भवो दिव्य इतिव्युत्पत्त्यासम्बन्धेऽपि देवानामिव तथादेहस्य प्राकृतत्वापत्तिः, दैवेष्वनरसृष्टिकृतस्त्वस्यैव दिव्यपदवाच्यत्वस्वीकारात्। यत्तु 'जन्म कर्म च मे दिव्यमि'त्युक्तं तदप्यप्राकृतत्वाभिप्रायेण, दिव्यपदस्य रूढार्थत्वस्वीकारात्। अत एव 'देहेन्द्रियासुहीनानामि'त्यत्र निषेधः। न तत्र सामान्योक्त्या निषेध एव देहादेरस्त्विति वाच्यम्, पुनरनन्तरमेव, 'वैकुण्ठपुरवासिनां पश्यतां पुरतां गानपि'त्यनुवदनेन तथाकारत्वेन निरूपणात्, तेन प्राकृताकारस्य निषेधस्तत्र पर्यवस्यति, न त्वप्राकृताकारस्य। प्राकृतभौतिकाद्विकारत्वं न तथा भगवतीति बोध्यम्। अत एवोक्तं 'साकारब्रह्मवादैकस्थापको वेदपारगः' इति

•

स्वाचार्यनाम सर्वोत्तमे । तत्रैकशब्दो मुख्यार्थवाची । साकारत्वमुक्त्वा यद्ब्रह्मत्वं निरूपितं, तद्यथा ब्रह्म केवलं सच्चिदानन्दमयं तथा तत्करचरणादीनामपि केवलसच्चिदानन्दमयत्वं ज्ञापितम् । साकारत्वकथनेन पुष्टिमार्गीयफलस्य तत्स्वरूपस्य सर्वेन्द्रियास्वाद्यत्व, फलानुभवप्रकार उक्तः । ननु यदपि सर्वशास्त्रार्थविचारकैरपि परब्रह्मणः साकारत्वनिरूपणात् कथमाचार्याणामेव साकारत्वनिरूपकत्वमिति चेत्, उच्यते । ब्रह्मणोऽत्यलौकिकत्वाच्चक्षुरादीनां लौकिकप्रमाणत्वान्न चक्षुरादिगम्यत्वं ब्रह्मणि, किन्तु स्वेच्छया संभवतीति श्रुतीनामलौकिकप्रमाणत्वेन श्रुतय एव परब्रह्मणि प्रमाणमिति तत्प्रतिपाद्यमेव ब्रह्म । तास्तु 'स ईक्षाञ्चक्रे' 'तस्मादेकाकी न रमते' 'स द्वितीयमैच्छत्' 'स हैतावानास' इति साकारमेव निरूपयन्ति । गीता च 'सर्वतः पाणिपादान्त सर्वतोऽक्षिशिरोमुखमि'त्यादि साकारत्वमेव वदति । ननु निराकारवादिभिरपि निराकारप्रतिपादने 'अस्थूलमनण्वह्रस्वमदीर्घमि'त्यादिश्रुतय एव प्रमाणत्वेनाङ्गीक्रियन्ते कथं न निराकारत्वमिति चेत्, उच्यते । निराकारत्वप्रतिपादका अपि श्रुतयो ब्रह्मणि देवाद्याकारवत् प्राकृताकारत्वमेव प्रतिषेधन्ति, नत्वानन्दमात्रकरपादमुखोदराद्याकारम् । यदि सर्वथा निराकारत्वमेव शुभ मतं स्यात्तदा निराकारत्वमुक्त्वापि अग्रे 'स ईक्षाञ्चक्रे' इत्यादिना साकारं न प्रतिपादयेयुः । अत एव व्याससूत्रमपि 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति । अस्यायमर्थः, प्रकृतमेतावत्त्वं प्राकृतं साकारत्वं, तन्निषेधति निराकारश्रुतिः, न त्वानन्दैकाकारत्वं, तत्र हेतुः 'ततो ब्रवीति च भूय' इति । अस्याप्यर्थः ततोऽग्रे । पुनरपि 'स ईक्षाचक्रे' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण' इत्यादि साकारत्वमेव वदतीति निराकारवादिना यत्किञ्चिच्छ्रुतिज्ञानवत्त्वेऽपि सर्वशाखीयोपनिषज्ज्ञानाभावात्तासु च प्रकारभेदतो ब्रह्मनिरूपणात्, तत्र परस्परविरोधपरिहारपूर्वकनिष्प्रत्यूहव्यवस्थया यत्सिध्यति तादृग् ब्रह्म मन्तव्यम् । निराकारवादिना सर्वशाखीयोपनिषत्तात्पर्यज्ञानाभावात्स्वबुद्ध्यनुसारेण यत्किञ्चिच्छ्रुतितात्पर्यं स्वसिद्धान्तानुसारं कल्पयित्वा निराकारत्वकथनमिति न तदुक्तं प्रमाणम् । स्वाचार्यैस्तु सर्वशाखोपनिषत्तात्पर्यस्य विरोधपरिहारेणावगमात्तत्र च साकारस्यैव निरूपणात् सर्वप्रकारेणैव साकारत्वमुक्तमिति सिद्धं साकारत्वम् ।

स च साकारः परमेश्वरः को वा भजनीयः, किं वा विष्णुर्वा व्यूहात्मा वा नारायणो ब्रह्माण्डविग्रहो विश्वरूपादिर्वेत्याकाङ्क्षायामाहुः व्रजाधिप इति । अनेन सर्वतो व्यापकत्वावतारदशापन्नेष्वपि भगवदंशेषु स्वरूपेषु भजनीयः श्रीकृष्णः पुरुषोत्तमो व्रजाधिप एवोक्तः । 'क्वचित्पाण्डित्यमि'तिश्लोके निर्णीतत्वात् । सोऽपि नोपास्यः किन्तु भजनीयो, 'भज' सेवायामिति धातोः । उपासनायाः कर्मान्तर्गतत्वेन मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविध्यधीनत्वं भजनीयस्यायातीति विभूतिरूपं व्यावर्त्यते । भजनञ्च सेवा, सैव भक्तिपदवाच्यार्थः । 'धात्वर्थः सेवा, प्रत्ययार्थः स्नेह'

इति निबन्धोक्तेः । 'सा परानुरक्तिरीश्वरे' इतिभक्तिसूत्रात् । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति नारदपञ्चरात्रोक्तेश्च । ज्ञानपूर्वकत्वे विहितस्नेहो भक्तिपदवाच्यः, अन्यथा त्वविहितः स्नेह इत्यन्यत्र विस्तरः । सा सेवा तनुवित्तजा कायिक्येव केवला संभूतेति मानसीत्वमपि लक्षणे निवेश्यते । 'प्रत्ययार्थः स्नेह' इत्यान्तरो धर्म उक्तः । तथैतदुक्तं सिद्धान्तमुक्तावल्यां 'चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजा' इति । तथा च देहेन्द्रियप्राणान्तःकरणैर्निवेदितात्मभिः संसेव्य इत्यभिप्रायतः सर्वभावेनेत्युक्तम् । सर्वो यो भावो देहेन्द्रियादीनां यथार्हं तत्तद्विनियोगात्मकस्तेन सेव्यः । सर्वात्मभावेनेति केचित् । सोऽप्यत्र पुष्टिमार्गीय एव । सर्वोऽपि आत्मनो भावो, न तु सर्वत्रात्मत्वभावनं, तस्य मर्यादामार्गीयत्वादिति विवेचनीयम् । किञ्च, स सर्वदा भजनीयः, न तु कदाचित् कर्ममार्ग इव, नैमित्तिकदेववद्वा ।

ननु वेदादिप्रमाणग्रन्थेषु तु तदुपासनं विहितमभिहितं न त्वेतद्दिदमप्यविहितमेव भजनमिति चेन्न, सर्वतः पृथक्त्वेनैतत्प्रमातो व्यवस्थापितत्वात् । 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व मामि'तिभगवद्वाक्ये भजनविध्युपपादितत्वाच्च । 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' इत्यादिना । अत एवात्राप्यावश्यकत्वार्थकतयानुशिष्टानां तव्यत्तव्यानीयर्प्रत्ययानां मध्ये अनीयर्प्रत्यय उपात्तः । तथा विध्यर्थकश्च । न चैवं विध्यधीनत्वप्रसङ्गः । मर्यादातो व्यतिरेकात् पुष्टिमार्गीयत्वाच्च । अत एवोक्तमेकादशस्कन्धे भागवते भगवद्धर्मनिरूपणप्रसङ्गे 'यानास्थाय नरो राजन् प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे'त्यादि । अयमेव धर्मः ॥ १ ॥

इति मठेशश्रीनाथभट्टकृता चतुःश्लोक्याः प्रथमश्लोकटीका समाप्ता ।

---

(१) तव्यत्तव्यानीयरः ( ३-१-९६ ) इतिसूत्रात् । ( २ ) नाधिका लभ्या ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# चतुःश्लोकी ।

## श्रीद्वारिकेशविरचितव्याख्यायुता ।

---

श्रीगोवर्धनधराय नमः ।

नत्वा श्रीवल्लभाचार्यान्विठ्ठलेशांश्च सद्गुरून् ।
स्वसिद्धान्तचतुःश्लोकीं विवृणोमि यथामति ॥ १ ॥

अथ श्रीमद्वल्लभाचार्यचरणाः कृष्णाश्रयग्रन्थे सपरिकरस्याश्रयस्य निरूपितत्वादाश्रितान् स्वमार्गीयप्रमाणप्रमेयसाधनफलानि निर्देष्टुं तद्बोधरूपधर्मार्थकाममोक्षार्थोपदेष्टुं पूर्वश्लोके धर्मं प्रमाणं च निरूपयन्ति सर्वदेति ।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन ॥ १ ॥

सर्वदेति सर्वस्मिन्काले । सर्वभावेनेति पतिपुत्रादिभावेन । तदुक्तं 'प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मे'ति, 'सर्वेषामात्मनो ह्यात्मा पिता माता स ईश्वर' इति, 'येषां च त्वं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवतञ्च' । व्रजाधिपः । व्रजस्य निःसाधनस्यानन्यस्वामिनः अधिपः स्वामी । कर्तव्यं निर्दिशन्ति भजनीय इति । कायवाङ्मनोभिरवश्यं सेवनीयः । यद्वा, सर्वेषामिन्द्रियाणां भावेन 'तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः' इतिरीतिकेन, निरोधलक्षणे वक्ष्यमाणरीतिकेन वा सेव्यः । स्वस्येति 'देवोऽसुरो मनुष्यो वे'तिवाक्यात्, 'को नु राजन्नि'तिवाक्याच्च स्वस्यात्मनो जीवमात्रस्य । स्वस्य कृष्णाश्रितजीवस्यायमेव धर्मः । तदेव भक्तिहंसे ' स्त्रियाः स्वपतिभजनव'दिति । अकर्तव्यं निषेधयन्ति..................

न काले श्रौतकर्तव्यस्य । 'वर्णाश्रमवतां धर्मः श्रुत्यादिषु यथोदितः । तथैव विधिवत्कार्यः' बालबोधे 'स्वधर्ममनुतिष्ठन्वै भारद्वैगुण्यमन्यथा' । अत एव सर्वोत्तमेऽपि 'कर्ममार्गप्रवर्तकः' 'यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः'; 'यज्ञभोक्ता यज्ञकर्ते'त्यादिनामानि । तथाकृतिश्च परम्परया दृश्यते । न चैवं ' सर्वदा'पदबाधः शङ्क्यः, भक्तिमार्गे साधनफलयोरैक्येन तेषामपि सेवा मध्यपातिनीति न बाधः ॥ १ ॥

एवं 'सर्वदा सर्वभावेन भजनीय' इत्यनेन प्रमाणं निरूप्य ' धर्मो ही'त्यनेन धर्मं च निरूप्य प्रमेयमर्थं च निरूपयन्ति एवं सतामिति ।

एवं सतां स्म कर्तव्यं स्वयमेव करिष्यति ।
प्रभुः सर्वसमर्थो हि तेन निश्चिन्ततां व्रजेत् ॥ २ ॥

उक्तप्रकारेण भजताम् । स्मेति प्रसिद्धिः । भगवद्गीतासु 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं'मितिभगवद्वाक्यात् । एकादशस्कन्धे च 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि, सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसे'तिभगवद्वाक्यात् । कर्तव्यं सेवोपयुक्तपदार्थसम्पादनं स्वयमेव करिष्यति । स्वकर्तव्यमितिपाठे स्वस्य जीवस्य भगवतो वा यद्यत्कर्तव्यं तत्तद्धरिः स्वयमेव अविकृत एव अप्रार्थित एव करिष्यति, न त्वन्यद्वारा । नापि कल्पवृक्षादिवत् । स हि प्रार्थित एव करोति । अत एव दशमस्कन्धे 'प्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः' । सर्वोत्तमेऽपि 'स्वदासार्थकृताशेषसाधन' इति । मार्यादिकभक्तेषु नृसिंहमहत्तरादिषु तथाकृतमपि श्रूयते । ननु भगवान् केन प्रकारेण करोतीत्याशङ्कायामाह प्रभुरिति । प्रकर्षेण भवतीति । भगवदीयाभिलषितशय्यासिंहासनादिरूपो भवति । यथा मैथिलश्रुतदेवयोर्गृहयोर्शय्यादिवाहनादिसर्वरूपो भूत्वा विवेश । तदुक्तं 'उभयोराविशद्गेहमुभाभ्यां तदलक्षित' इति । यथा च षोडशसहस्रनायिकाविवाहे श्रीवसुदेवादिवीरयात्रिकसर्ववस्तुरूपो भूत्वा सर्वत्र विवाहं कृतवान् । तदुक्तं 'अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः । यथोपयेमे भगवाँस्तावद्रूपधरोऽव्यय' इति । ननु सर्ववेदप्रतिपाद्यो भगवानुच्चावचभावं कथं भजते इत्यत आहुः सर्वसमर्थ इति । सर्वं कर्तुं समर्थः । अथवा । सर्वेषूच्चावचभावेषु समस्तुल्योऽर्थो यस्य । 'सर्वं खल्विदं ब्रह्मेति'श्रुत्या वस्तुतः सर्वस्य भगवत्त्वात् । तथा चोक्तमष्टमस्कन्धे 'उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः । नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः' । हि युक्तोऽयमर्थः । एतेन सिद्धमाहुः तेनेति । भगवतैव संपादितेनार्थेन निश्चिन्ततां भगवदेकतानतां व्रजेत् । निश्चिन्तो भूत्वा सेवां कुर्यात् । अत एव भक्तिवर्द्धिन्यां 'अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः' । नवरत्नप्रकाशेऽपि 'भगवत्यपि सा न कार्या' । विवेकधैर्याश्रयेऽपि 'प्रार्थिते सेवेन निर्ममः' । गदाधरदासादीनां तथाकृतिश्च श्रूयते । एवं प्रभुपदेनार्थं सर्वसमर्थपदेन मर्मेयं च निरूप्य 'भक्तियोगस्य तत्सर्वमन्तरायतयार्भक' इत्युपक्रम्य, 'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् । आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः । न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिष'इत्युक्तत्वात् ॥ २ ॥

एवं तु भगवतार्थसंपादने कृते भक्तिमार्गान्तरायः, स्वयं कृते सेवाऽनिर्वाह इति प्राप्ते; भक्तिमार्गीयं साधनं निरूपयन्तो हरेर्दिदृक्षाऽपूर्वं कामं निरूपयन्ति यदि श्रीगोकुलाधीश इति ।

यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि।
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥

एतेन दुर्लभतोच्यते। अत एव दिदृक्षा। श्रिया युक्तो गोकुलाधीश, एतेन कामसम्पत्तिर्निरूपिता। 'कामः स्त्रीषु प्रतिष्ठित' इतिवाक्यात्। 'कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तदि'तिवाक्यात् साधनसंपत्तिर्निरूपिता। तयोः स्वस्मिन्समावेशमाहुः धृतः सर्वात्मना हृदि। 'एकादशेन्द्रियैः काम' इतिवाक्यात्। अत्राऽऽत्मपदं इन्द्रियपरम्। सर्वपदं एकादशपरम्। सर्वेन्द्रियैः कामसाधनसंयुक्तो गोकुलाधीशो हृदि धृतो हृदये कृतस्तदा लौकिकफलस्य स्वाधीनपतित्वस्य वैदिकफलस्य चित्तशुद्धेश्च 'हृदि स्थितो यच्छति भक्तिपूत' इतिवचनादासत्वेन लौकिकैरध्ययनादिभिः वैदिकैर्यज्ञादिभिरपि किं? नास्ति परमुत्कृष्टं, यस्मादेतावताप्युत्कृष्टमस्ति चेद्ब्रूहि ॥ ३ ॥

एवं श्रीपदेन कामं साधनं च निरूप्य भगवदीयत्वरूपं मोक्षं स्मरणसेवारूपं फलं निरूपयन्ति—अत इति।

अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः।
स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

यतो हृदये श्रीगोकुलाधीशधारणादन्यसाधनं नास्ति, अतः परं सर्वात्मना देहेन्द्रियप्राणान्तःकरणैः शश्वन्निरन्तरं, गवां कुलस्य, गवां धनूनां गोपगोपीनां, गोकुलग्रामस्य वा ईश्वरस्य नियामकस्य पादयोर्भगवदीयदेहसंपादकयोः स्मरणमाध्यानं भजनं सेवनं, चकारेण श्रवणं कीर्तनं च, न त्याज्यम्। सादरं सर्वथा विधेयम्। अपिः संभावनायाम्। त्यागसंभावनैव नास्ति। एवं भगवदीयत्वरूपमोक्षं सेवारूपफलं चेति। स्वयं स्वाभिमामाण्येन ग्रन्थं समापयन्ति—इति मे मतिरिति। मे श्रीकृष्णवल्लभस्य इति एवं प्रकारिका मतिः ॥ ४ ॥

एवं भगवदीयानां धर्मार्थिश्चामृतप्रदा।
व्याख्यातेयं चतुःश्लोकी प्रमाणादिप्रदर्शिका ॥ १ ॥
येन श्रीवल्लभाचार्याः स्वदासे मयि वंशजे।
प्रसीदन्तु स्वकृपया सान्वयाः ससेवकाः ॥ २ ॥

इति श्रीवल्लभाचार्यचरणैकतानश्रीमथुरानाथात्मजद्वारिकेशविरचिता
चतुःश्लोकीव्याख्यान्वयबोधिनी
समाप्ता।

---

परिशिष्टम्

श्रीमद्-वल्लभाचार्य-महाप्रभु-श्रीमद्-विट्ठलेश-प्रभुचरण-विरचिता

# श्रीवृत्रासुरचतुःश्लोकी विवृतिः

व्याख्यात्रय-समलंकृता

१. श्रीहरिरायाणां टिप्पणी
२. श्रीवल्लभानां टिप्पणी
३. श्रीपुरुषोत्तमानां प्रकाशः

॥ श्रीनवनीतप्रियो जयति ॥

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

महानुभावश्रीहरिरायचरणानां श्रीवल्लभानाथ टिप्पणीभ्यः समुद्धृत, श्रीमद्विठ्ठलेश्वर-चरणविरचितप्रकाशेन विशदीकृता, श्रीमद्विठ्ठलेशप्रभुचरणानाम्।

# ॥ श्रीवृत्रासुरचतुःश्लोकीविवृतिः ॥



ननु पुरुषार्थाश्चत्वारस्तत्र त्रिवर्गविचारं भगवानेव करोति मोक्षस्तु भक्तानामेव नापेक्षित इति भक्तिमार्गे न कोपि पुरुषार्थः सिद्धवर्तीत्याशङ्क्य भक्तिमार्गीयं चतुष्टयं भिन्नमेवेत्याह—चतुर्भिः,

पूर्वमिन्द्रं प्रति प्राह ततो भगवयाग्नो हरिम् ।
दृष्ट्वा तत् प्रार्थयामास पुष्टिदृष्टफला यतः ॥ १ ॥
आद्ये तु पुष्टिमार्गीयो धर्मः स्मरणकीर्तने ।
सेवा चेति त्रयं तेन प्रार्थितः स निरूप्यते ॥ २ ॥
आत्मनश्चाधिकारित्वमुत्तमं दीनभावनः ।
प्रार्थनीयतया तस्य साधनं च कृपोच्यते ॥ ३ ॥

धर्मं प्रार्थयन् प्रथममधिकारित्वं स्वस्य निरूपयति, अहमिति,

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।

दास्ये तु न तथेत्याशयेनासच्छब्देन भेदमुपपादयति–अहमिति। ननु दास्यं कथं सेत्स्यतीत्यत आह–तवेति त्वदीयोऽहमित्यर्थः तेनावयोः सेव्यसेवकभावः सहज इति सूचितम्, अन्यथा त्रिवर्गविघातप्रभुत्वेऽपि सति कथं कुर्याः, ततो मोक्षे चानधिकार उक्तः, एवं चेत् कथं दास्यं न करोषीत्यत आह–भवितेति, जीवस्य त्वदीयत्वेऽपि देहस्यासुरत्वेनायोग्यत्वाद्देहान्तरे दासो भविष्यामीत्यर्थः, अतस्त्वदनुग्रहेणैव तथा भवितेत्यत्र विश्वासमाह–अस्मीति। साक्षात्प्रभुदास्ये हि स्वस्य दीनभावो गच्छतीति परम्परादासत्वमुक्तं, यद्वा, प्रभुदास्ये हि स्वस्य सर्वोत्तमत्वाभिमानेन भक्तान्तरे अपराधसम्भवात् प्रभुदास्यादपि भ्रंशो भवेत्तच्चानुभूतं चित्रकेतुदशायाम्, अतः परम्परादासत्वेन दैन्यमेवोषितमिति भावः।

अथवा तवेत्यादिपदसमुदायेन मोक्षादिक्रमेण वक्ष्यमाणपुरुषार्थचतुष्टयेऽध्यधिकाररूपं चतुर्विधं दास्यमुच्यते, तत्र पुष्टिमार्गे मोक्षो हि भजनानन्दानुभवः, स च देहेन्द्रियप्राणान्तःकरणयुक्तानामेव, 'अक्षण्वतां फलमिदं न परं विदाम'[1] इत्यत्र श्रुतिप्रतिपादितः, तत्र चाधिकाररूपं प्रभुदास्यं 'भवाम दास्यः'[2] 'पुरुषभूषण देहि दास्य'[3]मिति श्रुतिवाक्याद्दतस्तवेति पदान्मोक्षाधिकाररूपं प्रभुदास्यमुक्तम्, तस्येत्यसमासः, अन्यथा त्वत्पादेति वदेत्, तव पादावेवैकं मूलं येषां ते तथा, अर्थाद्व्रजस्थितभक्ता एव, 'तदङ्घ्रिमूलं गताः'[4] इति तेषामेवोक्तेः, तेन कामाधिकाररूपं तद्दासत्वमुक्तमन्यथा कामासिद्धेः, अत एवोक्तमाचार्यचरणैः 'तद्द्वारा गुरूपाणां च भविष्यामि न चान्यथे'ति। अनुपदेन तद्दासदासत्वमर्थाधिकाररूपमुक्तम्, ततस्तव दासत्वं धर्माधिकाररूपमुक्तम्।

ननु सत्सङ्गाभावेऽप्येवम्भावस्तव कथं जात इत्यत आह–भूय इति, पूर्वमहं चित्रकेतुर्दास एव स्थितोऽतः पुनरपि तथा स्थितेति भावः। एवं स्वस्याधिकारचतुष्टयं प्रतिपाद्य तारतम्यभावादादौ धर्मं प्रार्थयते मनः स्मरेतेति। असुपतेरिति गुणानामिति च कर्मणि षष्ठी, तथा च मनः असुपतिं स्मरेत चिन्तयेत्, स्मरणस्यात्मसुखैकसाधनत्वादात्मनेपदम्। वाक् तस्यैव गुणान् गृणीत कीर्तयेत्, कीर्तनस्यापि मुख्यः स्वार्थ एव परार्थस्त्वानुषङ्गिक इत्यात्मनेपदम्। कायस्तस्यैव कर्म सेवां करोतु, सेवा तु यथा प्रभोः सुखं भवति तथा क्रियते, न तु तत्राणुमात्रमपि स्वार्थपरत्वमतः परस्मैपदम्। स्मरणकीर्तनयोः श्रवणाधीनत्वेनान्यकथनसापेक्षत्वाद्द्विधिरुक्तः। सेवायां स्नेह एव नियामकः, स च प्रभुकृपैकसाध्य इति तत्प्रार्थीनिरूपिता ॥ १ ॥

---

(१) भा० १०, २१, ७ (२) भा० १०, २९, ३९ (३) भा० १०, २९, ३८ (४) भा० १०, ३९, ३८ (५) भा० १०, ३६, १.

णा अपि न काङ्क्षे । पारत्रिकमधिकारपर्यं निराकरोति—अपुनर्भवं चेति, 'मैत्त्वात् म-
त्प्रापणे ज्ञान'मित्यनेनाज्ञानस्य मायिकत्वेन जन्माद्यभावोऽस्त्यापि तथात्वमुक्तम्,
स च गणितानन्दत्वेन ब्रह्मानन्दांश एव न तु त्वम्, यद्यपि सेव्यसेवकभावेन नान्योन्यं
सम्भावना भेदाभावात्तस्मात्पर्यन्ताभावाद्यपुनर्भवत्वम्, जन्माभावातिरिक्तविशेषाभा-
वात्, त्वं तु पूर्णानन्दो भक्तानां सेव्यश्चेति 'मैत्र्यपणे न जानन्ति नाहं तेभ्यो मनाग-
पी'ति वाक्याद्यतो भजनातिरिक्तगणाभावेन त्वत्पादपद्मविरहेण त्वद्भक्तिरहितस्य विद्यमानत्वाच्चमपि
न काङ्क्षे । सर्वादृश्यं मोक्षानुगीयपुरुषार्थः स च पुष्टौ इत्यन्वेनार्थमध्ये गणित इत्यनादरयो-
क्षणार्थं चेत्युक्तम्, यद्य मोक्षस्याप्यनादरस्तदान्येषां किं वाच्यमिति च । तर्हि कोऽर्थस्तत्रापेक्षित
इत्यत आह—समञ्जसेति, हे समञ्जस पूर्णत्वात्सर्वगुणधर्मस्य, अतस्त्वया त्वां विरहय्य
पृथक्त्वेनोक्तार्थानहं न काङ्क्षे, किन्तु त्वामेव सर्वार्थरूपत्वात्सर्वत्वेन काङ्क्षे इत्यन्तरमित्यभि-
प्रायः । यद्वा उक्तार्थान्परित्यज्य त्वामेव प्रार्थ्यत्वेन काङ्क्षे ॥ २ ॥

एवमर्थं निरूप्य कामं निरूपयति—अजातपक्षा इवेति ।

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ ३ ॥

पुष्टिमार्गे हरे रूपदिदृक्षा मनसोऽस्य हि ।
कामो निरूप्यते तत्र दृष्टान्तत्रितयं यथा ॥ १ ॥
त्रितयं लौकिकं मोक्षभेदं शास्त्रीयमुत्तमम् ।
लौकिकस्त्रिगुणीभूय दृष्टान्तः स्यादविवेके ॥ २ ॥
अन्यथैकतरेणापि सिद्धेऽर्थे त्रितयेन किम् ।
क्षुद्रूपो लौकिकः कामो रसरीत्या तु शास्त्रतः ॥ ३ ॥
धर्मोऽस्तु रसरूपत्वात्सर्वस्यैकत्वेन चोत्तमः ।
अयमेव हि दृष्टान्तस्तेनान्ते चैकतोदिता ॥ ४ ॥

हे अरविन्द ? मनुस्त्वां दिदृक्षत इति सम्बन्धः । नेत्रयोरम्बुजत्वेन तद्दिदृक्षया
मनसो मधुपत्वं बोधितम् तथा चारविन्दे विकसिते मधुपस्य कामः सिद्ध्यति नान्यथेति तथा दृष्टिं
मयि संपादयेति प्रार्थितम्, दिदृक्षाहेतुभूतं स्वरूपसौन्दर्यं च संबोधनेन ध्वनितम् । मनसः
स्वतन्त्रत्वायास्मच्छब्दप्रयोगाभावः । किञ्च, दिदृक्षा दृशो धर्मः, स च मनसो निरूप्यते, तेन
सर्वेन्द्रियाणामपि मनःसंनिकर्षात्पूर्णः कामो निरूपितः, अन्यथा भजनानन्दानुभवो न स्यात्

( १ ) गीता अ १४. १० । ( २ ) भा ९-४-६८ । * अरविन्दाक्षेत्यपि पाठः ।

तस्य सर्वेन्द्रियैकवेद्यत्वात्। प्रभोः पूर्णकामत्वेन क्रियाफलस्यान्यगामित्वादात्मनेपदम्। मनसश्चञ्चलत्वान्मधुपत्वबोधनेन च कामान्तरं संभवतीति तदभावाय दृष्टान्तमाह—खगा इवेति, यथा पक्षिणः कदा किमानीय दास्यतीति मातरं द्रष्टुमिच्छन्ति, खगानां नियतभक्ष्याभावादनिपतस्य च क्षुधार्ततयार्थसिद्धत्वात्तदत्र नोक्तम्, तदपि न सर्वदा किन्तु कियत्कालपर्यन्तमेवेत्याह—अजातपक्षा इति, पक्षोद्गमानन्तरं न वर्तेते तावदेव दृष्टान्तेनेत्यर्थः। तथाचात्र क्षुदुपाधिकृतत्वमनियतविषयत्वमनियतकालत्वं चेति दूषणत्रयं संभाव्य द्वितीयं दृष्टान्तमाह—स्तन्यं यथेति। वत्सतरा अतिबाल्यवत्सास्ते यथा कदा स्तन्यं प्राप्स्याम इति तदिच्छन्ति तथेत्यर्थः। तेषां स्तन्यमात्रैककामत्वादत्र तदेव प्रोक्तम्, मातुरभावे तद्दुग्धा परस्या अपि स्तन्यं पिबन्तीति तदनुक्तिः। अत्रापि नियतविषयत्वेऽपि वत्सतरपदादनियत कालत्वं क्षुदुपाधिकृतत्वं चेतिदूषणद्वयं संभाव्य तृतीयं दृष्टान्तमाह—प्रियं प्रियेवेति, प्रियपदादुभयत्र निरुपाधिकस्नेहो निरूपितः, स्नेहस्य तथात्वं मदभिप्रेतोक्तं 'आधिर्मोचदिने न येन गणितो हेतुस्तमीयानपो'ति, तेनोपाधिदूषणमत्र परिहृतम्, व्युषितमिति प्रवासितमित्यर्थः, तेन गमनक्षणमारभ्यागमनावधि दिदृक्षाया एकरसत्वादनियतकालत्वं चापास्तम्। विषण्णेतिपदादनियतविषयत्वं च, अन्यथा विषादासम्भवात्, एवं दोषत्रयाभावादयमेव दृष्टान्तो युक्त इत्याशयेन स्वस्यैकत्वाद्गणैकवचनमुक्तमन्यथा पूर्ववदत्रापि बहुवचनं वदेत्, बहुषु तथात्वस्यासंभवात्, अत एवान्ते च निरूपणं कृतम्, पूर्वोक्तद्वयमेकदेशाभिप्रायेणेति तत्कथनमपि नानुपपन्नम्। किञ्च, प्रिया हि विप्रयोगे केवलं विषादमात्रं न करोति किन्तु, प्रिये विविधरसभावानन्तःप्रकटयति, अन्यथान्तरेण जीवनमेव न स्यात्, जाते च जीवने प्रियत्वं तु बाधितं स्यात्। स्वस्य पुरुषत्वेन स्त्रीदृष्टान्तान्यथानुपपत्त्या च सजातीयरसभाव उक्तः, अतो रसस्याविशेषेऽप्यत्रायं भावः प्रियापदेनाभिव्यज्यते, विषादस्य तु बहिरप्यनुभूयमानत्वादेव्यज्ञानविषयत्वाच्च तथाविशेषणम्, एवमनेकरसभावविशिष्टं विषण्णं च मनस्त्वां दिदृक्षते, न तु दर्शनमात्रमिच्छति, तत्तु पूर्वमर्थत्वेन व्याख्यातत्वादत्रानुपपन्नं विशेषाभावात्, अन्यत्र, अस्मच्छब्दप्रयोगे हि देहाध्यासहेतो भवति साम्प्रतं तु रसानुभवयोग्यदेहाभावादुपसर्गस्य च तत्रानिरन्तरत्वादध्यासाभावान्मन एवोक्तं न तु मयेति। दृष्टान्ते च तदध्यासस्य दृढत्वात्प्रियेयेति निरूपितं न तु मनः, अन्यथा प्रियेवाहं दिदृक्षे इति दृष्टान्तसाधर्म्यं वक्तव्ये मनो दिदृक्षत इति न वदेत्, अतो रसमार्गीयः कामो रसदानेन पूरणीय इति तथा सम्बोधनेन भावितम्॥ २॥

---

१ निजमति नपुंसके पाठः। * अत्राविनियशाद्विभीति पाठः।

एवं कामं निरूप्य मोक्षं निरूपयति–ममोत्तमेति,

ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ ४॥

पुष्टिमार्गे हरेर्दास्यं धर्मोर्थो हरिरेव हि ।
कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम् ॥ १ ॥

पुष्टिमार्गे* मोक्षो निरूप्यते,

---

श्रीमद्वल्लभाचार्यचरणकमलरेणुभ्यो नमः ॥

## अथ श्रीहरिरायचरणविरचिता टिप्पणी ।

श्रीवल्लभाचार्यपद स्वीयसर्वार्थसम्पद ॥
प्रणमामि तदुक्तार्थबोधनाय मुहुर्मुहु ॥ १ ॥

[१] अथ श्रीवल्लभाचार्यचरणा पुष्टिमार्गे धर्मार्थकामाना पूर्वपद्येषु स्पष्टत्वमवगम्यमानत्वान्मोक्षमात्रस्य सन्दिग्धत्वादतिविलक्षणत्वाच्च तन्निरूपयन्ति–पुष्टिमार्गे इति पुष्टिर्हि प्रभोरनुग्रह स च फलदानेच्छा, सापि द्विधा, केवला विशिष्टा च, तत्र केवला नि प्रकारा, साधन प्रकारस्तद्रहिता, विशिष्टा ससाधना सैव फलप्राप्त्युपायतया मार्ग इत्यर्थ । तत्र मोक्षो निरूप्यत इत्यर्थ ।

## अथ श्रीपुष्टिमार्गीयमुक्तिविवृतिप्रकाशः ।

दशदिगन्तविजयि–श्रीपुरुषोत्तमपाद–प्रणीतः ।

श्रीकृष्णाय नमः

प्रणम्य श्रीमदाचार्यचरणाँस्तत्कृपाबलात् ।
तदीया पुष्टिमार्गीयमोक्षोक्तिं विवृणोत्ययम् ॥ १ ॥

[१] अथ श्रीमदाचार्यचरणा पुष्टिप्रवाहमर्यादाया पुष्टेर्मार्गस्य विवृतत्वेन तत्र पुमर्थाना॰ मवश्यवक्तव्यत्वात् पुष्टे पञ्चस्कन्धार्थत्वेन तत्र सपरिकरायास्तस्या निरूपितत्वात् तदन्तरैर्वाक्यैरेव तान्विवरिषव पूर्ववाक्येषु धर्मार्थकामाना स्पष्टत्वात्तुरीयस्य चास्पष्टत्वात्तन्निरूपण प्रतिजानते–पुष्टिमार्गे मोक्षो निरूप्यत इति,† "पोषणं तदनुग्रह" इतिलक्षणवाक्यात्पुष्टिरनुग्रह,, स च धर्मान्तरमिति भक्तिहेतुनिर्णये स्थितम्, स एव फलसाधनत्वान्मार्ग । तत्र मोक्षो (भा० २, १०, ६.) " मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरि "तिवाक्योक्तलक्षणकमन्यथारूपत्यागपूर्वक स्वरूपेणावस्थानम् । निरूप्यते इतरवैलक्षण्येन ज्ञाप्यत इत्यर्थ ।

---

१ इयं चतुर्थश्लोकविवृतिः श्रीमदाचार्यचरणानामेवेति तद्विवरणेष्ववगम्यते दृश्यते चैतत्प्रमापकः पेङ्कुलेखो ग पुस्तके । * पुष्टिमार्गीय इत्यपि पाठः । † भा २ १०, ४.

**तत्र स्थितौ बन्धो नामाहन्ताममतास्पदेष्वासक्तिस्तदन्येषु सङ्गश्च, तस्य सहेतुकस्याभावो मोक्षश्च, पुष्टिस्तु तद्विपरीता, तत्र व्यवस्थया मोक्षद्वयमाह—ममोत्तमेति ।**

---

टिप्पणी—[१] अत पर पुष्टिमार्गे बन्धमोक्षाभ्यां वैलक्षण्यं निरूपयन्ति तत्र स्थिताविति, तत्र स्थितौ पुष्टिमर्यादाया बन्धोऽहन्ताममतास्पदेषु पुत्रदारगृहधनादिषु आसक्तिः सर्वात्मना तन्निष्ठमनोवृत्ति, तदन्येष्वासक्तिविषयान्येषूदासीनेषु सङ्गश्च तस्य बन्धस्य सहेतुकस्य तदुत्पादककारणकलापसहितस्य योऽभावः स मोक्ष इत्यर्थ । पुष्टौ तद्वैपरीत्यमाहु—पुष्टिस्त्विति, पुष्टिः पुष्टिमार्गस्ताभ्यां बन्धमोक्षाभ्यां विपरीता, पुष्टिमार्गे बन्धो हि पुत्रादिष्वासक्तिविपर्ययेषु भगवदीयत्वेनानासक्तिरुदासीनेषु भक्तेष्वसङ्गश्च, तदभावो मोक्ष । भगवदीयेषु पुत्रादिष्वासक्तिभंगवद्भक्तसङ्गस्य च मोक्ष इति वैपरीत्यमित्यर्थ ।

प्रकाशः— [२] ननु "असङ्गमजरं पाशमात्मनः कवयो विदुरि"ति ( भा० ३, २५, २० ) "स्नेहपाशैर्निबध्नाति भवान्सर्वमिदञ्जगदि"त्यादिवाक्यैर्बन्धस्य स्पष्टत्वेन तदभावरूपमोक्षस्यापि तथात्वात्तस्य च मार्गमात्रतुल्यत्वादपार्थोऽयं प्रयास इति शङ्कायामाहु—तत्रेत्यादि, मोक्षस्येतरवैलक्षण्येन ज्ञाप्यतया वैलक्षण्यप्रतियोगिनोऽवश्यवक्तव्यत्वे, स्थितौ उपादेयतया प्रतियोगिभूतायाम्, बन्धः संसारकारणभूत उक्तविधः, तस्य सहेतुकस्य "तत्र सत्वं निर्मलत्वादि"त्यादिगीतावाक्यात्तद्धेतवो गुणास्तत्सहितस्य बन्धस्याभावो ध्वस्तविमोक्षः । पुष्टिः पुष्टिसरणी, तद्विपरीता विरुद्धलक्षणा, तथा च तत्र संसारास्पदेषु असङ्गासक्ती मोक्षस्तदभावश्च बन्ध इत्यर्थ । तत्र मोक्षस्तु अत्र स्फुटिष्यति, बन्धस्तु तृतीयस्कन्धनवमाध्याये ब्रह्मस्तुतौ "अन्नाप्तुतार्त्तकरणा" इत्यस्य सुबोधिन्यां व्युत्पादित । ये पूर्वजन्मनि प्रभात्मभावचिन्तपरा स्तेभ्य' स्वोत्तनिवृत्तिमार्गेकरणाद्भगवान्प्रसन्नो भूत्वा सत्यादिलोकेष्विह वा किञ्चित्प्रसाद प्रयच्छति तदा नेदमस्माकमपेक्षितमिति ततो विमुखा प्रभात्मभावचिन्तनेनैव "मामवेहावसानाध्रे"विश्लोकोक्तरीत्येहैव सञ्चरन्तीति स्वमुक्तत्वाभिमानेन भगवत्प्रसादागृहाणा ऋषीणामप्येव भाव इति ।

श्रीकृष्णाय नम

## अथ श्रीमद्वल्लभानामियं टिप्पणी ।

ममोत्तमेतिश्लोकविवरणे तत्रेति मोक्षविषये इत्यर्थ, स्थिताविति मर्यादामार्गे इत्यर्थ । पुष्टिमोक्षप्रबोधकतया प्राक् तन्निरूपणस्यावश्यकत्वात् । तद्विपरीतेति, स्वरूपत साधनत फलतश्चेत्यर्थ । स्वरूप कृपया निःसाधनाङ्गीकार, साधनं गृहस्थितिपूर्वक भजनम्, फल साक्षाद्भजनानन्दानुभव । अत एव फलप्रकरणे प्रमाणनिष्ठात्यागेन तदनुभव, नो चेत् द्विप्रदायकपक्षिभावौ शून्यासनमेव स्यात् । तत्र व्यवस्थयेति, पुष्टिमार्गे व्यवस्थयेत्यर्थ ।

---

१ गीता १४. ६

एवं कामं निरूप्य मोक्षं निरूपयति—ममोत्तमेति,

**ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।**
**त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ ४ ॥**

पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि ।
कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम् ॥ १ ॥

पुष्टिमार्गे* मोक्षो निरूप्यते,

---

श्रीमद्वल्लभाचार्यचरणकमलेभ्यो नमः ॥

## अथ श्रीहरिरायचरणविरचिता टिप्पणी ।

श्रीवल्लभाचार्यपदं स्वीयसर्वार्थसम्पदं ॥
प्रणमामि तदुक्तार्थबोधनाय मुहुर्मुहुः ॥ १ ॥

[१] अथ श्रीमदाचार्यचरणाः पुष्टिमार्गे धर्मार्थकामानां पूर्वश्लोकेषु स्फुटत्वेनावगम्यमानत्वा-न्मोक्षमात्रस्य सन्दिग्धत्वाल्लोकविलक्षणत्वाच्च तन्निरूपयन्ति—पुष्टिमार्ग इति पुष्टिर्हि प्रभोरनुग्रहः स च फलदानेच्छा, सापि द्विधा, केवला विशिष्टा च, तत्र केवला नि प्रकारा, साधन प्रकारस्त-द्रहिता, विशिष्टा ससाधना सैव फलप्राप्त्युपायतया मार्ग इत्यर्थः । तत्र मोक्षो निरूप्यत इत्यर्थः ।

## अथ श्रीपुष्टिमार्गीयमुक्तिविवृतिप्रकाशः ।

दुर्जनदिग्गजविजयि–श्रीपुरुषोत्तमपाद–प्रणीतः ।

श्रीकृष्णाय नमः

प्रणम्य श्रीमदाचार्यचरणाम्भोजपांसवम् ।
वक्ष्यामि पुष्टिमार्गीयमोक्षोक्तिं विवृणोम्यहम् ॥ १ ॥

[१] अथ श्रीमदाचार्यचरणाः पुष्टिमार्गीयधर्मार्थकामानां विवृतत्वेन तत्र पुरुषार्थाना-मवान्तरफलत्वात् पुष्टे फलरूपत्वेन तत्र सपरिकरतया निरूपितत्वात् तन्निर्णयेन तान्विवरिषवः पूर्वश्लोकेषु धर्मार्थकामानां स्फुटत्वात्तृतीयस्य चात्मत्वात्तन्निरूपणं प्रतिमानते—पुष्टिमार्गे मोक्षो निरूप्यत इति,१ "पोषणं तदनुग्रहः" इतिलक्षणवाक्यात्पुष्टिरनुग्रहः, स च भक्तोन्नतमिति प्रसिद्धमुनिर्णये स्थितम्, स एव फलसाधनत्वान्मार्गः । तत्र मोक्षो (भा० २, १०, ६) "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" इति लक्षणोक्तमन्यथारूपत्याग-पूर्वकं स्वरूपेणावस्थानम् । निरूप्यते इत्यनेनेत्यादिना लभ्यत इत्यर्थः ।

---

१ इदं चतुर्थश्लोकविवृतिः श्रीमदाचार्यचरणानामेवेति नद्विवरणव्याख्यानाम्दने दृश्यते कैश्चनमाणक-वेदुर्व्येरनो न मुद्र्यते । * पुष्टिमार्गीय इत्यपि पाठः । १ भा २ १०, ४

**तत्र स्थितौ बन्धो नामाहन्ताममतास्पदेष्वासक्तिस्तदन्येषु सङ्गश्च, तस्य सहेतुकस्याभावो मोक्षश्च, पुष्टिस्तु तद्विपरीता, तत्र व्यवस्थया मोक्षद्वयमाह—ममोत्तमेति।**

---

टिप्पणी—[१] अत पर पुष्टिमार्गे बन्धमोक्षाभ्यां वैलक्षण्यं निरूपयन्ति तत्र स्थिताविति, तत्र स्थितौ पुष्टिमर्यादाया बन्धोऽहन्ताममतास्पदेषु पुत्रदारगृहधनादिषु आसक्तिः सर्वात्मना तन्निष्ठमनोवृत्ति, तदन्येष्वासक्तिविषयान्येषूदासीनेषु सङ्गश्च तस्य बन्धस्य सहेतुकस्य तदुत्पादककारणकलापसहितस्य योऽभावः स मोक्ष इत्यर्थ । पुष्टौ तद्वैपरीत्यमाहु—पुष्टिस्त्विति, पुष्टिः पुष्टिमार्गस्ताभ्यां बन्धमोक्षाभ्यां विपरीता, पुष्टिमार्गे बन्धो हि पुत्रादिष्वासक्तिविषयेषु भगवदीयत्वेनानासक्तिरुदासीनेषु भक्तेष्वसङ्गश्च, तदभावो मोक्ष । भगवदीयेषु पुत्रादिष्वासक्तिर्भगवद्भक्तसङ्गस्य च मोक्ष इति वैपरीत्यमित्यर्थ ।

प्रकाशः—[२] ननु "प्रसङ्गमजरं पाशमात्मनः कवयो विदुरि"ति (भा० ३, २५, २०) "स्नेहपाशैर्निबध्नाति भवान्सर्वमिदञ्जगदि"त्यादिवाक्यैर्बन्धस्य स्पष्टत्वेन तदभावरूपमोक्षस्यापि तथात्वात्तस्य च मार्गमात्रतुल्यत्वाद्वर्णनीय प्रयास इति शङ्कायामाहु—तत्रेत्यादि, मोक्षस्येतरवैलक्षण्येन ज्ञाप्यतया वैलक्षण्यप्रतियोगिनोऽवश्यवक्तव्यत्वे, स्थितौ उपादेयतया प्रतियोगिभूतायाम्, बन्धः संसारकारणभूत उक्तविध, तस्य सहेतुकस्य "तत्र सत्त्वं निर्मलत्वादि"त्यादिगीतावाक्यात्तद्धेतवो गुणास्तत्सहितस्य बन्धस्याभावो भवादिर्मोक्षः। पुष्टिः पुष्टिसरणी, तद्विपरीता विरुद्धलक्षणा, तथा च तत्र संसारास्पदेषु प्रसङ्गासक्ती मोक्षस्तदभावश्च बन्ध इत्यर्थ । तत्र मोक्षस्तु अत्र स्फुटिष्यति, बन्धस्तु तृतीयस्कन्धनवमाध्याये प्रकरणे "अन्धापृतार्तकरणा" इत्यस्य सुबोधिन्यां व्युत्पादित । ये पूर्वजन्मनि ब्रह्मात्मभावचिन्तनपरास्तेभ्य स्वोक्तनिवृत्तिमार्गकरणाद्भगवान्प्रसन्नो भूत्वा सत्यादिलोकेष्विह वा किञ्चित्प्रसाद प्रयच्छति तदा नेदमस्माकमपेक्षितमिति ततो विमुखा ब्रह्मात्मभावचिन्तनेनैव "प्राप्तदेहावसानाश्चे"ति श्लोकोक्तरीत्यैहैव सञ्चरन्तीति स्वमुक्तत्वाभिमानेन भगवद्दत्तप्रसादाग्रहणात्तेषामप्येव भाव इति ।

श्रीकृष्णाय नम

# अथ श्रीमद्वल्लभानामियं टिप्पणी।

ममोत्तमेतिश्लोकविवरणे तत्रेति मोक्षविषये इत्यर्थ, स्थिताविति मर्यादामार्गे इत्यर्थ । पुष्टिमोक्षप्रदर्शकतया प्रकृतनिरूपणस्यावश्यकत्वात्। तद्विपरीतेति, स्वरूपत साधनत फलतश्चेत्यर्थ । स्वरूप कृपया नि साधनाङ्गीकार, साधन गृहस्थितिपूर्वक भजनम्, फल साक्षाद्व्रजनानन्दानुभव । अत एव फलप्रकरणे प्रमाणनिष्ठात्यागेन तदनुभव, नो चेत् द्विजदारवत्तच्चिन्तायां गृहगमनमेव स्यात्। तत्र व्यवस्थयेति, पुष्टिमार्गे व्यवस्थयेत्यर्थ ।

---

१ गीता १४, ६

**मोक्षो हि द्विविधः, पुष्टिमर्यादया पुष्टिपुष्ट्या च। † (मर्यादाया ज्ञानेनैव मुक्तिः, पुष्टौ च ज्ञानेन भक्त्या वा मुक्तिः) भगवत्पारोक्ष्यापारोक्ष्याभ्यां व्यवस्था, प्रत्यक्षेपि भगवति**

---

टिप्पणी—[३] अथ पुष्टे शुद्धमिश्रभेदेन द्विविधाया मोक्षैक्यस्य बाधितत्वाद्व्यवस्थया तद्द्वयमाहु—तत्रेति, पुष्टिमार्गे व्यवस्थयैकेन पद्येनार्द्धाभ्यां मार्गभेदेन मोक्षद्वयमाहेत्यर्थः। **ममोत्तमेति मोक्षो हि द्विविध** इति, कर्मभिः संसारचक्रे भ्रमणेन भगवदीयत्वप्रकारेण पुत्राद्यासक्त्या, चोत्तमश्लोकजनसङ्गस्य मोक्ष इति द्विविध इत्यर्थः। उपायद्वैविध्यमाहु—**पुष्टिमर्यादयेति**, पुष्टिमर्यादा ह्यनुग्रहः साधनसाहित्यम्। पुष्टिपुष्टिश्च तत्र तद्राहित्यमिति भेदः।

[४] ननु प्रकारभेदेपि तत्सख्यस्यैकरूपताया कथं व्यवस्थया द्वैविध्यमित्याशङ्क्याहु—**भगवत्पारोक्ष्येति**, पुष्टिमर्यादामोक्षरूपसख्ये भगवत्पारोक्ष्यं शास्त्रार्थतया गुणगानकर्तृशुकादिसख्ये तथात्वस्य स्पष्टत्वात्। अत एव *"**मथुराया व्रजङ्गता**" इत्यादिषु परोक्षेणैव कथनम्। पुष्टिपुष्टौ तु गुणगानविषयलीलाविशिष्टप्रभोरपारोक्ष्यम्, ‡"**नन्दसूनुरय**"मित्यादिषु तथात्वे स्वव्मायथेत्याभिमुख्योक्तेश्च स्पष्ट एव व्यवस्थया भेद इत्यर्थः।

प्रकाशः—[३] ननु मार्गैक्ये साधनस्य समानतया वैजात्याभावात्फले कथं भेद इत्यत आहुः तत्रेत्यादि, तथा च मार्गे अवान्तरभेदान्मोक्षभेद इत्यर्थः।

[४] ननु किंनिबन्धनो भेदः, कथं च मोक्षभेद इत्यत आहुः—**मोक्षे** हीत्यादि। वेदोक्तकर्मज्ञानभक्त्यो मर्यादेति पुष्टिप्रवाहमर्यादाया स्थितम्, तेष्वत्र प्रकरणवशाद्विहितज्ञानभक्ती ग्राह्ये योगोपासनादिग्रहणे त्रयो वा, तथा च यया ताभ्यां तैर्वा मिश्रितोऽनुग्रहः पुष्टिमर्यादा, तथैक। अनुग्रहान्तरेण मिश्रितोऽनुग्रहः पुष्टिपुष्टिश्चेतर इति भेदनिबन्धकमुक्तम्। स्वरूपभेदमाहुः—**भगवदि**त्यादि, तथा चाद्यया भगवत्परोक्षानुभवः, इतरया च प्रत्यक्षानुभवः, इति ताभ्यां कृत्वा भक्तरूपावस्थितिरूपमोक्षस्यापि स्वरूपभेद इत्यर्थः।

[५] एवं श्लोकार्थं सङ्गृह्य पूर्वस्य गुणभावं स्पष्टयितुं पूर्वार्द्धस्थपदानि विवृण्वन्तः पूर्वश्लोकेषु हरेसमग्नसारत्रि-दाक्षपदे सम्बोधनेन भगवत्प्रत्यक्षताया स्पष्टत्वादत्रापि सबुद्धि सभाव्यते, तथा सति हे उत्तमश्लोक! उक्तविधस्य मम जनेषु सख्यं न भूयादिति जननादिधर्मवत्सख्याभावप्रार्थनं श्लोकार्थो भवति ■ वाऽपुनर्भवपर्यन्तमनाकाङ्क्षतो मनसा भगवन्तं दिदृक्षतश्च प्रतिबन्धनिरासस्य प्रागेव आतत्वाचादृशा सख्याभावे स्यादेव निरस्त इति न युज्यतेऽत समासमादृत्यान्य एवार्थो वक्तुमुचित इत्याशयेनाहुः—**प्रत्यक्षेपी**त्यादि, अप्रत्यक्षत्वादिनापि सम्बो

श्रीवल्लभटि०—ननु एकस्मिन्नेव मार्गे कथं व्यवस्थाभेद ? तत्राहुः—**भगवत्पारोक्ष्येति**, पुष्टिमर्यादास्था परस्परं गुणसमाजनेनान्तःप्रकटेनैव भगवता पूर्णतां मन्वाना लोकोपकारिणः शुकादय इवात्मारामा रमन्ते। शुद्धपुष्टिमार्गीयास्तु साक्षाद्धरिं सर्वं वमन्तरा नैतावतैव पूर्णतां मन्यत इति एतत्कृतो व्यवस्थाभेदः। अत एव फलप्रकरणे भगवद्भावसम्पत्त्या गुणगानेन च न तापशान्तिः, पश्चादाविर्भूते एव तास्मिंस्तच्छान्तिः।

ननु पुष्टिमर्यादास्था कदाचित्प्रत्यक्षे भगवति प्रमाणनिष्ठां परित्यज्य तमेव गृह्णीयुस्तदा कथं

---

† इयं पङ्क्तिर्नहि कैश्चिदपि टीकाकारैर्व्याख्याता तथा घ च* पुस्तकयोरपि नोपलभ्यते।
* भा० १०, ६, ३१ ‡ भा० १०, ३५ ४

शास्त्रार्थत्वाय उत्तमश्लोकजनेष्विति समासः। भक्तसंवलित एव भगवांस्तद्वारा फलं द-

टिप्पणी—[९] नन्वस्ति भगवान् शास्त्रार्थ "'वेदैश्च सर्वै'"रितिस्मृते "त त्वौपनिषदं पुरुषमिति" श्रुते "सर्ववेदान्तप्रत्यय"मिति न्यायाच्चातस्तत्प्राप्त्यर्थं तज्ज्ञानार्थं च तथाप्रतिपादकभक्तसख्यापेक्षा इति तदुपायापेक्षा। तत्र परोक्षे भगवति गुणगाने भक्तवाक्यप्रतिपाद्यतया तदपेक्षा। प्रत्यक्षे वचसा गौणतया न शास्त्रार्थता, साक्षादनुभूयमानत्वादिति तैदुत्तरतैदुपायरूपभक्ता नापेक्षन्त इति तदा किमिति तत्सख्यप्रार्थनमित्याशङ्क्याहु —प्रत्यक्षेपीति।

उत्तमश्लोकजनेष्वितिसमासेनैकार्थताबोधकेन प्रभोर्भक्तानां च परस्परं सापेक्षता सूचिता। तथा च भक्तानां प्रभुसंवलितत्वमेव तत्सापेक्षत्वं, प्रभोश्च तद्द्वारैव फलदातृत्वमिति सापेक्षत्वात्प्रत्यक्षेपि प्रभौ भक्तापेक्षासत्त्वान्न भक्तप्रतिपाद्यतारूपशास्त्रार्थत्वव्याहतिरित्यर्थः। एतेन प्रभुस्वरूपमनुभूयमानमपि भक्तनिरूपितमेव विदित भवतीति भाव।

प्रकाशः—

धनानुरोधेन बौद्धसंभिधानस्य "*अहं समाधाय मनो यथाह सङ्कर्षणस्तच्चरणारविन्द" इतिवाक्यात्पूर्वं सर्वस्मरणस्य चावश्यंवाच्यत्वात्तस्यैकान्तभक्तत्वमवश्य वाच्यम्, तथा तादृशस्यासुत्यागावसरे भीष्मप्रभृतीनामिव भगवदनुकम्पा, तया दर्शनदान चावश्य मन्तव्यम्, तथा सति कालुष्यापि प्रत्यक्षे ? तस्मादुक्त प्रत्यक्ष इति। एव यद्यपि भगवान्प्रत्यक्ष इति मम त्वदीयेषु जनेष्विति वक्तव्यम्, तथापि यदेवमुक्त तेन उत्तमैर्यथार्थशास्त्रार्थविद्भिः श्लोक्यते कीर्त्यत इत्युत्तमश्लोकः। उत्तमा परापरविद्यागोचरा वा श्लोका कीर्तिर्यस्य स तथा। तस्य ये जना, "न कर्मबन्धनं जन्म वैष्णवानां च विद्यते, विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण" इति पाद्मात्तादृशजन्मयुक्तास्तेष्विति च समास स शास्त्रार्थत्वाय, भगवत शास्त्रार्थरूपत्व ज्ञापयितुमित्यर्थ। अत्र "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इत्यनेन तुमुन प्रयोगे चतुर्थी। फलेभ्यो यातीतिवत्।

ननु शास्त्रार्थत्वमुत्तमश्लोकपदीयसमासेनैव प्राप्यते, न तु पदत्रयसमासेन। तथा च तादृशत्वेन सम्बोध्य प्रतिबन्धकाभावप्रार्थनेन सत्सङ्गादौ पर्यवसास्यतीति कथ सम्पूर्णोय तथार्थ इत्यत आहु -भक्तेत्यादि। तथा च वैयासकिः स भगवानथ विष्णुरातमि"त्यनेन तादृशसत्सङ्गे

श्रीवल्लभटि०—तन्देदस्तत्राहु –प्रत्यक्षेपीत्यादि। कदाचित्प्रत्यक्षेपि देवा शास्त्रार्थत्वमेव। गुणसभाजनरूपेण शास्त्रेणैवार्थ पुरुषार्थो यया ते तथा। तत्रावस्तत्त्व तदर्थमित्यर्थ। समासतात्पर्यमाहु —उत्तमेति। उत्तमै शुकादिभि शास्त्रद्वारा श्लोक्यत एव न तु पुष्टिस्थैरिव बहिरनुभूयते। तत्सम्बन्धिनो जना। ययोत्तमानां भगवतश्च श्लोकितृश्लोक्यभाव एव सम्बन्धो न त्वन्योपि बाह्यत्तया तेषु समासेन पदैकत्ववदर्थैकत्वमपि ज्ञापितमिति तद्द्वेन त इत्यर्थ। तादृग्जनेषु सख्यप्रार्थनया तत्समानशीलव्यसनत्व सिद्धो मुक्तवा सिद्धेति सख्यस्य मोक्षरूपत्व सिद्धमिति स एव प्रार्थ्यते।

ननु भगवत्सख्यमेव कुतो न प्रार्थ्यते तत्राहु—भक्तसंवलित इति। तादृग्जनसख्यद्वारा नकुलादौ लक्ष्म्यादिभक्तसंवलित एव फलरूप स भवतीत्येकम्।

१ गीता १५, १५। २ प्रत्यक्षोत्तरम। ३ प्रत्यक्षोपायरूपा * भा ६, ११, २१

दातीति पौरुषसभाजनञ्च (" येन्योन्यतो भागवता" इति तृतीयस्कन्धे दर्शनकारणं पौरुषसभाजनमुक्तं) फलम्। भक्तेषु दास्यपर्यन्तस्य साधनत्वात्सख्यं मार्थयते।

---

टिप्पणी—[६] ननु प्रकटे प्रभौ फलरूपे तत्सख्य कोपयुज्यते तस्य तु गुणगानसाधनत्वादत्र कथं शास्त्रार्थत्वप्रत्यय इत्यत आहु—पौरुषसभाजनञ्च फलमिति। उभयत्रापि परोक्ष्यापरोक्ष्ययो पौरुषसभाजनं श्रीअभिनन्दन विषयत्वाप्यर्थेत्यावित्य तदेव फलं, स्वरूपस्य तु गुणगानावसरमात्रभावत्वस्य तद्रूपस्य तदनुभवाधीनानुभवस्य तच्छेषत्वमिति तस्यैव फलतया प्रारब्धेपि तद्वत्तमस्योपयोगेन शास्त्रार्थत्वसिद्धिरिति भाव।

[७] ननु भक्तानामीदृशत्वे तेषु दास्यमप्रार्थयित्वा सख्यमप्राप्य सख्य कथ प्रार्थितमित्याशङ्क्याहु—भक्तेष्विति। भक्तेषु "मद्भक्तपूजाभ्यधिके"त्यादिना श्रवणमारभ्य दास्यपर्यन्तस्य सर्वस्य सख्यरूपफलसाधनत्वात्फलप्रकरणत्वात् फलरूप सख्यमेव प्रार्थयत इत्यर्थ।

प्रकाशः—

तैरप्याविष्टो भगवांस्तद्द्वारा फलतीति पदत्रयसमाससमर्थित्वा लभ्यते, तदभावे तु वैयक्त्येन सम्बोधनेनोदासीनतया सत्सङ्गाक्षेपात्प्रार्थनमसङ्गतं स्यादत पदत्रयसमास एवादरणीय इत्यर्थ।

[६] ननु पारोक्ष्यसत्सङ्गेपि शास्त्रार्थरूपस्य परोक्षेण प्रकाशात्तत्र चानुभवामीति प्रत्ययाभावात्कथ फलतीत्युच्यत इत्यत आहु पौरुषेत्यादि। "नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः। येन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणी—" इत्यत्र श्रीकपिलदेवैर्भगवदीयानां परस्परासक्तिपूर्वकं भगवत्पौरुषसम्भाजनरूप जीवना साधनमुक्त, तथापि " प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः, नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः" " परिनिष्ठितोपि नैर्गुण्य उत्तमश्लोकलीलया, गृहीतचेता राजर्षे आख्यानं यदधीतवान्" "तदहं तेभिधास्यामि" "निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरि—" त्यादिषु गुणातीतानां स्वरूपावस्थितानां रतिविषयत्वेन कथनात्फलम्। तथा च तद्दानेन फलतीत्यर्थ। यद्वा च समुच्चये। तथा च यथा काव्यश्रवणे वर्णनीयस्य परोक्षत्वेऽपि विगलितवेद्यान्तर आनन्दो लौकिकानां, तथात्र स्वानन्दवद्गुणाश्च सभाजयन् तथेत्यर्थ।

[७] नन्वेतादृश फल श्रवणेपि भवति यथा परीक्षित, तस्यापि "नातितृप्ये जुषन्युष्मद्वचो हरिकथामृतम्" " येनै येनावतारेणे" त्यादीनां गुणसभाजनवाक्यानां दर्शनात्। तत्र च वक्तुरपेक्षया हीनभावस्य स्फुरत्वात् सङ्गममात्रमेव तदर्थं प्रार्थ्यं, सख्ये को विशेष इत्यत आहु—भक्तेष्वित्यादि। इमानि वाक्यानि सभाजनप्रयोजकानि न सभाजनरूपाणि। स्वरूपादि-

श्रीवल्लभटि०—इह तादृशे सह गुणसभाजन देहधर्मनिवारणपूर्वकं ब्रह्मानन्दादप्यधिकविलक्षणरसानुभवो भवतीत्यपर फलम्, तदप्युक्त पौरुषसभाजनञ्च फलमिति। तेन सत्सख्ये फलद्वयमिति सप्रार्थनेत्यर्थं। भगवत्सख्ये तु एकैव फलमिति कदाचिदर्जुनवत् (गीता अ ११-७-४१) "यच्चावहासार्थमसत्कृतोऽसि" इति वाक्येतत्सख्यमपोषीति न तु प्रार्थनेति भाव।

---

१ भा १०,३१,२ २ भा ११,१९,२१। ३ भा ३ २५,३४। ४ भा २ १,७।
५ भा २,१,९। ६ भा २,१,१०। ७ भा १ १,४। ८ भा ११ २ २। ९ भा १०,७,१

सर्वथा स्वतन्त्रत्वाय स्वनिष्ठभक्तविषयकीर्तनम् । गुणसभाजने स्वस्यापि स्वातन्त्र्यार्थं,

---

टिप्पणी—[८] ननु तन्निरूपितसख्यमप्रार्थ्यं मम उत्तमश्लोकजनेष्विति षष्ठीसप्तमीभ्यां निष्ठताविषयताबोधिकाभ्यां कथं स्वनिष्ठतद्विषयकसख्यप्रार्थनमित्यत आहुः—सर्वथा स्वतन्त्रत्वायेति । सख्यस्य भक्तिमार्गीयमोक्षतया स्वातन्त्र्यमुचितं, न तु स्वनिरूपितत्वे तन्निरूपितत्वे वा तस्य व्याहन्येत । अत स्वनिष्ठभक्तविषयसख्यकीर्तनमित्यर्थः । एतेनैतन्मार्गीयमोक्षस्या साधनसाध्यत्वमुक्तं भवति ।

[९] ननु पौरुषसभाजनं हि फलं तदस्वातन्त्र्ये न भवति, तथा सति श्रवणमेव भवेन्न सभाजनमिति फलप्रतिबन्धकतया न सख्यं मोक्ष । सभाजनविशिष्टस्यैव तस्य तथात्वादित्यत आहुः—गुणसभाजन इति । गुणानां समाजने अभिनन्दने स्वस्यापि स्वातन्त्र्यार्थं स्वस्यापि प्रकाशः—

ज्ञानपूर्वकतदनुवादस्य सभाजनत्वात् । "कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः" इत्यादौ तथा दर्शनात् । परीक्षिच्छुककथाना गुणादिज्ञानार्थत्वात् । अतस्तादृशसभाजनस्य वक्तृश्रोतृत्वकथनेन साधनत्वम् । तच्च वाक्यपर्यन्ततानां तुल्यं, सख्यस्य तु तदीयस्वरूपमानसजनकत्वमिति विशेषात्तत्प्रार्थनमित्यर्थः ।

[८] नन्वभयं विशोकत्वमपारतन्त्र्यं च मोक्षलक्षणं "अभयं वै जनक प्राप्तोसि" "स्मर्तव्यश्चेच्छतामयं," "तरति शोकमात्मवित्" "तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतमि"त्यादिवाक्यात् । प्रकृते तु "निष्ठया विधिषेधत" इत्यनेन "एष ह वाव न तपतीति" श्रुत्यर्थस्फुरणात्तेषा भयाभावशोकाभावयोः सत्त्वेपि सख्यस्य ससम्बन्धकत्वेन पारतन्त्र्यान्न मोक्षत्वमित्यत आहुः—सर्वथेत्यादि । तथा च दयाप्रश्रयादिवत् ससंबन्धकत्वेपि स्वधर्मत्वेन तेषु विद्यमानः सख्यरूपो धर्मो मत्सम्बन्धोप्यस्त्वित्याशयेनात्र स्वनिष्ठस्य भक्तविषयस्य सख्यस्य कीर्तनं पृथक्त्वनैमित्तिकत्वेपि तस्य विद्यमानतया सर्वथा स्वातन्त्र्यं ज्ञापयितुं, तेन न मोक्षत्वहानिरित्यर्थः ।

[९] ननु सख्यस्य स्वतन्त्रत्वेपि स्वस्य सख्येन भोक्तृत्वे वक्तृपारतन्त्र्यान्मुक्तत्वहानिस्तेषां च जनत्वेनोपशान्त्यादिभावविकारदशापत्तौ प्रतियोग्यभावेन सख्यस्याप्यभावे देशकालपरिच्छेदात् सख्यस्य मुक्तित्वहानिरित्यत आहुः—गुणेत्यादि । तथा च बहूनां युगपद्वक्तृत्वासम्भ-

श्रीवल्लभटि०—ननु स्वाधीनत्वात्तादृश्जनदास्यमेव कार्यं तेन गुणसभाजनमपि सेत्स्यतीति किं सख्यप्रार्थनयेत्यत आहुः—सर्वथेति । तद्दास्ये लोकस्य स्वातन्त्र्येपि दास्यव्यासङ्गेन तत्सभाजने सर्वथा तत्स्यादिति तदर्थं स्वस्मिन् विद्यमानस्य लोकविषयसख्यधर्मस्य भक्तविषयकं कथनमित्यर्थः ।

ननु गुणसभाजको महान् "मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने" इति वाक्यादेक एव भवति । तत्सभाजनं च तदधीनमतः स्वातन्त्र्यमसंभावितं तदपि तत्सख्ये सति भवति तादृशेन तदप्यसम्भावितमिति किं तत्प्रार्थनयेत्यत आहुः—गुणसभाजने स्वस्यापीत्यादिना । जनेषु इति बहुवचनतात्पर्यं, न हि तादृश एक एव किन्तु

---

१ वा इति पक्षान्तरे सख्यस्य भक्तनिष्ठनिरूपितत्वे सति स्वातन्त्र्यं व्याहन्येत. २ सकलस्य, ३ भगवत्प्रार्थनेन ।

क्लेशसाधनपदेन कृपया साधनसंपत्तिश्च सूचिता । योग्यायोग्यदेहानां बहुधाजातत्वादिदानीं तदभावार्थं प्रार्थना । क्लेशे स्वामिनामग्रहणस्य हेतुत्वेनायुक्तत्वात्कर्मपदम् । आवश्यकत्वाय स्वपदम् । निरवधित्वाय बहुवचनम् ।

---

टिप्पणी—[ १२ ] ननु तथापि भगवद्दर्शनमस्ये किं साधनं, न हि ते संसारपरिभ्रमणमात्रेण मिलन्ति तत्सङ्गस्य भवापवर्गसाधनत्वात् “भवापवर्गो भ्रमत” इति वाक्यादित्याशङ्क्याहुः—क्लेशसाधनेति । क्लेशसाधनपदेन परिभ्रमणपदेन कृपया सतां तत्साध्यसाधनसंपत्तिः सिद्धिः सूचितेत्यर्थः । ते हि कर्मभिर्भ्रममाणमवलोक्य सहजकरुणा' कृपालवो भवन्ति । सैव च साधनमिति तथेत्यर्थः । एतेन भक्तिमार्गस्य सांशस्यापि निःसाधनत्वं द्योतितं, न हि तदीयोंऽशः कोपि साधनैः सिद्ध्यति ।

नन्वेवं सति कथं प्रार्थनेत्याशङ्क्याहुः—योग्यायोग्येति । संसारचक्रभ्रमणेन योग्यायोग्यदेहा बहवो जाता इतीदानीं क्लेशेन स्वधर्ममविचार्यापि तदभावार्थं प्रार्थना, न फलार्थमित्यर्थः ।

[ १३ ] ननु कथं भक्तिमार्गीयस्य वृत्रस्य सर्व्योपयोगिचक्रभ्रमणहेतुत्वेन कर्म युज्यत इत्यत आहुः—क्लेश इति । स हि भक्तिमार्गीय एवेति भ्रमणरूपे क्लेशे हेतुत्वेन स्वामिनो नामग्रहणमयुक्तमिति हेतुत्वेन कर्मोक्तवानित्यर्थः । ननु तानि कर्माणि त्यक्तव्यानि भ्रमणसाधनत्वादित्यत आहुः—आवश्यकत्वायेति । स्वकृतत्वेनावश्यंभोक्तव्यतया कर्माणि न त्यक्तुं शक्यन्त इति भावः । ननु किं बलं कर्मणां स्वसाध्यत्वादित्यत आहुः—निरवधित्वायेति । बहुवचनेन कर्मणां निरवधित्वमुक्तं, नैहि कश्चिदिति भावयान् ।

प्रकाशः—[१२] ननु तथापि संसारपदेन क्लेशसाधनतापि स्फुरतीति कथं दुःखासम्भेद इत्यतस्तात्पर्यमाहुः—क्लेशसाधनेत्यादि । तथा च तेन पदेन भगवन्तं प्रति तया सा सूचितेति तदर्थं तत्पदप्रयोगो न क्लेशबोधनायेति न दुःखसम्भेद इत्यर्थः ।

नन्विदं सूचनं प्रार्थनाफलं तथा सति कथं क्लेशाभाव इत्यत आहुः—योग्येत्यादि । तथा चेतः परं भगवद्दययाऽन्तिमदेहभावनाद्वितः प्रागेव क्लेशो, न त्वेतदुत्तरमपीति न दुःखसम्भेद इत्यर्थः ।

[१३] ननु कार्यमात्रं प्रति भगवदिच्छायाः कारणत्वेन क्लेशेपि तस्या एव तथात्वादीशमकस्य तत्स्तुतेरेवोचितत्वात् कथं तदनुक्तिरित्यत आहुः—क्लेश इत्यादि, बहुवचनमित्यन्तम् ।

आवश्यकत्वायेति । तत्फलभोगावश्यकत्वाय । तथा च तमोचितं, किन्तु कर्मपदमेवोचितम् । तथेदृशक्लेशे प्रार्थनाप्युचितेत्यर्थः ।

ननु “ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः, उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन्नि ”त्यत्र त्रयाणां भ्रमणकारणत्वसिद्धेः कथं कर्ममात्रस्यैव कारणत्वेन कथनमित्यत

श्रीवल्लभटि०—

क्लेशेति । क्लेशसाधनं संसारस्तत्पदेनेत्यर्थः । तत्र पतितस्य चेतत्कृतनमनम्बन्धसाधनमिति, गा तदेवेतरपः

---

१ भा. १०, ६१, ६४. २ स्वभावानुत्वेन । ३ भक्तिमार्गीयस्य भगवति प्रार्थनानुचितम्. । ४ गीता ३, ९.

चक्रपरिभ्रमणे दण्डस्येव मुख्योपयोगे तृतीया। अस्या मुक्तेर्गौणत्वाय नात्र प्रार्थनापद प्रयोगः। तथा च तादृशभगवद्भक्तसख्यं पुष्टिमर्यादीया मोक्ष इत्युक्तम्।

टिप्पणी—ननु संसारचक्रभ्रमणे साधनान्तराणामविद्याकामादीनां सत्त्वात्कथं कर्ममात्र तत्साधनत्वेनोक्तमित्यत आहुः—चक्रपरिभ्रमण इति। सर्वेषां निमित्तकारणत्वेपि कारणता भोगविषयत्वेन मुख्योपयुक्तानां कर्मणामेव। चक्रे दण्डस्येवेति ज्ञापनाय तृतीयेत्यर्थः।

[१४] नन्वर्थतः प्रार्थनासिद्धावपि तद्बोधकपदप्रयोगाभावतात्पर्यमाहुः—अस्या इति। अस्याः पुष्टिमर्यादामुक्तेर्द्वितीयापेक्षया गौणत्वज्ञापनायात्र प्रार्थनापदानुक्ति। निर्गलितार्थमाहुः—तथा चेति। एतादृश पूर्वोक्तधर्मविशिष्ट चक्रभ्रमणादिक्लेशप्राप्य भगवद्भक्तसख्य पुष्टिमर्यादाया मोक्ष इत्युक्तम्।

प्रकाशः—

आहुः—चक्रेत्यादि। कर्माभावे ताभ्यां तथाभ्रमणाभावस्यानुभवसाक्षिकत्वाद्भ्रमणे मुख्योपयोग कर्मणामेवातस्तेषामेव तथात्व बोधितमित्यर्थः।

[१४] ननु भवत्येव तथापि सख्य प्रार्थयत इति यदुक्त तदसङ्गतम्। प्रार्थनावाचक पदस्यात्रानुपलम्भादतो व्याख्यान सर्वमेव सन्दिग्धमित्यत आहुः—अस्या इत्यादि। तथा च तदप्रयोगमात्रेणोक्तेऽर्थे न सन्देहमित्यर्थः। सिद्धमाहुः—तथा चे त्यादि। पुष्टिप्रवाहमर्यादाया "तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशय" इति जीवभेद पूर्वोक्तहेतुभिर्निगमयित्वा भगवद्रूपसेवार्थं तत्सृष्टिः, तेषा स्वरूपादिभिर्भगवत्तुल्यत्व, सेवासिद्धयर्थमीषत्तारतम्य चोक्त्वा तेषां शुद्धमिश्रभेदेन द्वैविध्य प्रतिज्ञाय मर्यादामिश्राणा गुणज्ञत्व लक्षणमुक्त, तत्र भगवद्रूपसेवार्थं तत्सृष्टत्वे सति स्वरूपादिभिर्भगवत्तुल्यत्वे सति सेवार्थमीषत्तारतम्यवत्त्वे सति भगवद्गुणज्ञत्व मर्यादामिश्र पुष्टजीवत्वमिति फलति। तथा "वैदिकत्व लौकिकत्व कापट्यात्तेषु नान्यथा। वैष्णवत्व हि सहज ततोऽन्यत्र विपर्यय" इत्यन्यथारूपज्ञापनपूर्वक सामान्यलक्षण त्रयाणां तत्रोक्तम्। तन्मूले "नैकात्मता मे" "प्रायेण मुनय." "परिनिष्ठितोपी"त्येतेषु "तत्रोभवद्भगवान् व्यासपुत्रः" "त व्यष्टवर्षं" "द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः। अंशांशेनावतीर्योर्व्यां समाप परम पद" "त स्कन्द इत्याचक्षते" सुहृत्तमदिदृक्षितभङ्क्षे "गोविन्दभुजगुप्तायां द्वारावत्यां कुरूद्वह। अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः" इत्यादिभिः शुकसनत्कुमारनारदेषु स्फुटम्, तथा "कायेन तु फलं पुष्णाति" इति पुष्टिफलस्य स्वरूपसाध्यत्व तत्रोक्तम्। तदत्र "वैयासकिः स भगवानि"त्यनेनोक्तम्। तेन लौकिकत्ववैदिकत्वरूपा इत्यर्थः। अत्रापि पूर्वकक्षा परीक्षिति, उत्तर-कक्षा सनत्कुमारादिषु ज्ञेया। छान्दोग्ये सनत्कुमारनारदसंवादे सर्वोत्तमभावविवरकतया तस्मिंस्तथा-त्वस्य शक्यवचनत्वाच्छ्रुतिगीतायनिर्णयस्य भजनार्थताया सुबोधिन्या निर्णीतत्वाच्चेति। अथ मोक्ष प्रायस्तुरीयाश्रमाणां हंसपरमहंसानामेवेति भाति। तदाहरणस्य तेष्वेवोपलम्भादिति दिक्।

श्रीवल्लभटि०—अस्या इति। शुद्धपुष्टिमुक्त्यपेक्षया गौण वादित्यर्थः।

१ भा १, १९ २६। २ भा १, १९, २६। ३ भा ११, ३०, १.।

द्वितीयमाह—त्वन्माययेति । समासादेव भिन्नतया न मायामोहनम् ।

---

टिप्पणी—[ १६ ] पुष्टिपुष्टिमोक्षं वक्तु सजातीयत्वबोधनायाभासमाहु —द्वितीयमाहेति । द्वितीयं भक्तिमार्गीयं मोक्षमाहेत्यर्थः । तस्य मर्यादाऽप्राप्यकेवलपुष्टिप्राप्तिप्राप्यत्वात् तत्सजातीयत्वसिद्धिरित्यर्थः । त्वन्माययेति । संसारचक्रे भ्रमतो भगवदिच्छया कुटुम्बासक्तस्य न किन्तु, त्वन्मायया तदासक्तस्य मे भूयादिति संबन्धः । पूर्वस्माद्वैलक्षण्यमाहु —समासादेवेति । त्वन्माययेतिसमासेन तस्याः स्वरूपसम्बन्धित्वमुच्यते । सा च स्वरूपसम्बद्धैव तदर्थं मोहयति न तु पृथग्भावेन लीलार्थमेव तस्याः प्राबल्यादत एव तदुपक्रमे तस्या आज्ञापनम् । वैष्णवीं व्यतनोन्मायामित्यादिष्वपि सैवोक्ता । सा च भगवान् यत्र प्रकटीभूय लीलां करोति तत्रैवोपयुज्यते, तदभावे लीलाऽसम्भवात् । एवं सति पुष्टिपुष्टिमोक्षस्य प्रकटलीलाविशिष्टप्रभुस्वरूपान्तररमणरूपत्वात् तदुपयोगित्वेन गृहादिष्वासक्त्यपेक्षणात् त्वन्माययेत्युक्तम् । पूर्वत्र तु पारोक्ष्येण साक्षाल्लीलाऽसंभवान्नासक्तेरुपयोगः । माया तु तत्रापि भगवदीया परं न स्वरूपसम्बन्धिनी, "मम माये-" तिव्यत्यासेन कथनात् तदुक्तेश्च । अत एवात्रोक्तं न भिन्नतया प्रभुपृथग्भावेन मायामोहनमिति, किन्तु प्रभुरेव तया मोहयतीत्यर्थः ।

[१५] प्रकाशः—अतः परं पुष्टिपुष्टिमोक्षं विवरितुमाहुः—द्वितीयमित्यादि । ननु "प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम्" "त एते साधवः साध्वि" "सर्वसङ्गेन हि देतेया" इत्यादिवाक्ये सत्सङ्गस्य मोक्षद्वारत्वात् पूर्वोक्तवाक्येषु गुणगानस्य फलत्वसाधनाच्च पुष्टिमर्यादामोक्षरूपत्वं वक्तव्यस्योचितम् । तच्च पूर्वार्द्धे भूयादित्यदूरान्वयाङ्गीकारेण सिद्धम् ।

अतः परमुत्तरार्द्धे देहाद्यासक्तिशोभकं स्वविशेषणमवशिष्यते, निषेधो नाथस्य च । तथा सति देहाद्यासक्तिनिषेधः प्रार्थनीयत्वेन फलिष्यतीत्यासक्तिरूपो मोक्षः कथमत्र कथं वा देहाद्यासक्तेर्मोक्षत्वमित्याकाङ्क्षायां भगवदपरोक्षज्ञानेन पुष्टिपुष्टिमोक्षस्य पूर्वं व्यवस्थापितत्वादत्र तादृशत्वेन तस्या मोक्षत्वं वक्तुं देहाद्यासक्तिजनकमोहने विशेषमाहु—समासादित्यादि । मायाशक्तिर्हि मोहने अधिकृता । तत्र यदि "माया चाविद्या च स्वयमेव भवतीति" श्रुत्या मायाविद्ययोरभेद आद्रियते यद्यपि "ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् । महामोहं च मोहं च तमश्चाज्ञानवृत्तयः" इति "तामिस्रमन्धतामिस्रं तमो मोहो महातमः" इति द्वादशविंशाध्यायवाक्ययोः पर्वपञ्चभेदेनाविद्याभेदस्य तृतीयस्कन्धसुबोधिन्यां विंशाध्याये भगवत्कर्तृकत्वकथनपूर्वकं श्रुत्या-

---

१ गच्छ देहि व्रज भङ्ग इति । २ भा. १०, ८, ४३. । ३ गीता ७, १४ मम माया दुरत्ययेति गीतावाक्ये मम मायेति पदे बोध्यम् तत्र मायाया मोहरूपत्वात् तत्साक्षात्सम्बन्धिनम् न तु श्री कृष्णमायायाःस्वरूपम् । ४ भा ३, २५, २४. । ५ भा. ११, १२, ३. । ६ भा ३, १२, २. । ७ भा ३, २०, १८ ।

पूर्वस्मादेतस्य विशेषस्त्वत्पदेनोक्तः । आभिमुख्यञ्च । त्वदिच्छया प्राप्तस्यात्मात्ममादिषु सख्यं पुष्टिपुष्टिमोक्षः ।

---

टिप्पणी—[ १६ ] ननु को विशेषो मोहस्यैकजातीयविषयत्वादित्याशङ्क्याहु –पूर्वस्मादिति । पूर्वस्मात् मोहादेतस्य पुष्टिपुष्टिमोक्षाय मोहस्य विशेष आदरणीयत्व मोक्षाङ्गत्वादिरूपस्त्वेत्पदेन प्रकारतया तत्सम्बन्धसूचकतोक्त इत्यर्थ । यद्वा, नन्वेतस्मिन्नपि मोक्षे मायामोहस्य तुल्यत्वात्को विशेष इत्यत आहु –पूर्वस्मादिति । एतस्य पूर्वस्मात् मोक्षाद्विशेषस्त्वत्पदेनोक्त । एतत्सम्बन्धिमायाया अपि सदा स्वरूपसाहित्यादिति भाव । किञ्चात्र मोक्षे विशेष प्रकारान्तरेणाप्युपपादनीय इत्याहु –आभिमुख्यं चेति । एतत्प्रार्थनावसरेपि यत्र वृत्रस्य प्रभु प्राकट्यम्, अन्यथा त्वत्पद न प्रयुञ्ज्यात् । तत्र तदनुभवे तस्य का वार्तेति भाव ।

प्रकाशः—

वृनात्पूर्वापेक्षयोत्तमत्वस्य च ततोपि दहाहङ्कारो भगवत्सेवौपयिकत्वादुत्कृष्ट इति पञ्चमपर्वव्याख्यानेन सूचनाद्भगवद्वैमुख्येन महाभोगेच्छारूपस्य तत्प्रथमपर्वण इन्द्रे वर्तमानस्य मखभङ्गगुवर्धनधरणलीलोपयोगिताया, भोगेच्छारूपस्य द्वितीयस्योग्रसेनादौ, अज्ञानस्य तृतीयस्य “ सैयो नष्टस्मृतिरि ”त्यादौ, मोहस्य चतुर्थस्य कालियदमनादौ, महामोहस्य पञ्चमस्य सेवौपयिकताया सर्वत्र स्फुटत्वाच्च तदुत्तमताया स्फुटत्वेन प्रकारभेदो मोहने । यदि च “ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणा । मोक्षबन्धकरी आद्ये मायया मे विनिर्मित ” इतिवाक्ये कार्यकारणभावोपचा भेद आद्रियते तदाप्यविद्याकृत मोहन ससाराय, मायाकृत तु भगवल्लीलार्थं, तदपि “ वैष्णवीं व्यतनोन्माया मजास्नेहमयीं प्रभुरि ”त्यादौ स्फुटम् । प्रकृते च सदभिप्रेतमवस्तव माया त्वन्मायेति साक्षात्सम्बन्धबोधकात् त्वदविनाभूता माया त्वन्मायेति वा तथाभूतात्समासादेव भिन्नतया भगवत्सम्बन्धराहित्येन केवल ससारार्थतयेति यावत् । तथा न मायामोहनमित्यर्थ ।

[१६] ननु शक्ते शक्तिमदविनाभावस्य साक्षात्सम्बन्धस्य च सर्वजनीनत्वात् सर्वतन्त्रसिद्धत्वाच्च सर्वदैव तथात्वेन प्रागपि वैष्णव इति पूर्वजन्मीनस्यापि देहपुत्राद्यासक्तिरूपमोहस्य तथात्वेनस्य च बन्धकताया मूले पुत्रशोकशापादिकथया स्फुटत्वेन प्रकृते तत को विशेषो ? येन मोक्षस्वमित्यत आहु–पूर्वेत्यादि । अविनाभावस्यानुक्तसिद्धत्वेन तद्बोधकपदोक्तिप्रयोजनाभावेपि या तदुक्तिसैदानीं प्रार्थ्यमानस्य मोहस्य तच्चिकीर्षितलीलार्थत्व बोधयतीत्येष पूर्वस्माज्जन्मनो विशेष इत्यर्थ ।

ननु भवतु लीलार्थत्व तथापि मायामोहो भगवदज्ञानस्य “ये संवसन्तो न विदुर्हरिं मीना इवोडुपमि”त्यादिषु सिद्धत्वात् परोक्षज्ञानमपि चेद्दूरे कुतस्तर्हि प्रत्यक्षसभावनेति पूर्वोक्तव्यवस्था न भज्येतैवेत्यत आहु –आभिमुख्य चेति, तद्धि भगवतो नाभिमुख्ये, प्रकृते

श्रीवल्लभटि०—पूर्वस्मादित्यत्र । पूर्वत्र माया भिन्ना, तस्याश्च परित्याग । अत्र तु स्वरूपाभिन्नेति न तत्परित्याग प्रत्युत स्वरूपविषयकासक्तिजनकत्वेन फलसाधकत्वाद्गुण एव, अतो विशेषस्तेनेत्यर्थ । आभिमुख्यञ्चेति । प्रत्यक्ष एव त्वत्पदव्यवहार इति तत्प्रार्थनायामेव भगवदाभिमुख्यमितीदमपि विशेषहेतुरित्यर्थ ।

---

१ त्वत्पदेन मायाया तत्सम्बन्धवत्त्वेनापि स्पष्टोऽर्थ । २ भा १०, ८, ४४

कृतार्थत्वं तु नाथपदप्रयोगादेव सूचितम् । तदन्ते च प्रार्थना, *[१] "भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इति सिद्धान्तात् ।

---

टिप्पणी—[ १८ ] नन्वयं प्रकारस्तु श्रीमदाचार्यैरुक्त एव, पुनरस्य कथमेवं कथनाविचार इत्यत आहुः—कृतार्थत्वं त्विति । स हि तद्भावद्व्यागत्यैव कृतार्थः पूर्णसर्वार्थः । न ह्येन दतिरिचमन्यास्य निश्चित्फलं भवति । रसानुभवस्तु तेषामेव । अन्यः कामयमानोऽप्यपोष्य पैतेद्-तत्सद्भावस्फुरणेन भगवदीयत्वसिद्ध्या कृतार्थ एव । अन्यथा नाथपदं न प्रयुञ्ज्यात् । न हि केचिदप्यभगवदीया भगवन्तं नाथत्वेन संबोधयन्ति, तदनधिकारात् । अनधिकारकृतस्य दोषावहत्वाच्च । प्रकृते तत्कथनाधिकारसिद्धौ सिद्ध कृतार्थत्वमिति भावः ।

[ १९ ] नन्वेवं सति फलान्तरानभिलाषिण प्रार्थना न घटत इत्याशङ्क्याहुः—तदन्ते चेति । नाथपदप्रयोगान्तेऽपि या सत्यप्रार्थना सा भक्तिसिद्धान्तबोधनाय । तत्र हि भगवदीयत्वमेव परमपुरुषार्थः । "भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इतिवाक्यात् । स च तत्सख्येनैव भवतीति ज्ञापनाय तथाप्रार्थनमिति भावः ।

प्रकाशः—[१८] नन्वस्त्वेवं तथाप्यग्रे प्रार्थितं सेत्स्यतीत्यत्र किं गमकमत आहुः—कृतार्थेत्यादि । पूर्वसन्दर्भे भक्तत्वस्य स्फुटत्वादत्र च नाथपदप्रयोगेण दैन्याविर्भावबोधना "दुःस्थाना दैन्यमेवैकं हरितोषणसाधनमि"ति सर्वत्र दर्शनेन भगवत्तोषादिति तत्प्रयोगादेव तत्सिद्धिः सूचितेत्यर्थः ।

[१९] नन्वत्रासक्तिरूपैव कृतार्थतेत्यत्र किं गमकमत आहुः—तदन्त इत्यादि । इदं वाक्यं पञ्चमस्कन्धीयषष्ठे ऋषभचरितसमाप्तावस्ति, तत्र च पूर्वं तयोः चरित्रश्रवणाख्यानयोः फलं भक्तिरिति "भगवति तस्मिन् वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्तते" इत्यनेनोक्ता । तदग्रिमे "यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इति वर्तते । तत्र संसारावस्थावस्थितानां कविस्वेन भगवद्गुणगातॄणां भक्तिजन्यसुखेन भगवद्दत्तपरमोक्षानादरपूर्वकं भगवदीयत्वधर्मेण सर्वेद सम्यक्प्राप्तसर्वपुरुषार्थत्वमुक्तम् । तावता "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" "स एव भक्तियोगाख्य आत्यन्तिक उदाहृत"

श्रीवल्लभटि०—ननु सर्वसाधनापेक्षारहितेन कृतार्थेन पुष्टिमोक्षः प्रार्थ्य इति तत्राहुः—कृतार्थत्वं त्विति । सर्वसाधनैस्त्वं चेन्नाथस्तदा न किञ्चित्कर्तव्यमिति त्वत्पदेन तत्सूचितमित्यर्थः । तदन्ते चेति कृतार्थत्वान्ते । पुष्टिमोक्षप्रार्थनेत्यर्थः । पुष्टिमोक्षस्वरूपमाहुर्भगवदीयत्वेनैवेत्यनेन ।

---

* भा० ५ ६-१७ १ अयोग्यमिच्छन्पुरुषः पतत्येव न संशयः । २ लीलास्थितिरथत्वम् । ३ भा० ३, २९, १३+१४ ।

धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं माया क्रमाद्देहाद्यध्यासं करोति । तत्र देहाध्यासे धर्मसिद्धिः प्रसिद्धा । पुत्रापेक्षया अन्यार्थस्योत्कृष्टस्याभावादर्थसिद्धिः ।

---

टिप्पणी—[ २० ] नन्विदमद्भुतमिवाभाति यन्मोक्षे मायातत्कार्यसंबन्धसाहित्यमित्याशङ्क्य मोक्षेऽद्भुतत्वसाधनाय वैलक्षण्यं निरूपयितुमाहुः—धर्मार्थेति । अत्रायमाशयः मर्यादामार्गीयमोक्षे हि तन्मायासंबन्धो न धर्मार्थकामानां प्रत्युत विरुद्धत्वं च । प्रकृते तत्साहित्याविरुद्धत्वादिबोधनायास्मात्ममदारगेहेष्वासक्तचित्तस्येत्युक्तम् । यतो माया क्रमात् देहेन्द्रियादिक्रमाद्देहाद्यध्यासं चतुर्विधपुरुषार्थसिद्ध्यर्थं करोति । तत्रैकेनैव देहाध्यासेन धर्मार्थकाममोक्षान्तान्साधयति । एवमिन्द्रियाद्यध्यासेनेति क्रमो ज्ञेयः ।

[ २१ ] तत्र देहाध्यासं विवृण्वन्ति तत्रेति । तत्रैतेष्वध्यासेषु देहाध्यासे धर्मसिद्धिः प्रसिद्धा, तदध्यासवतामेव तत्राधिकारात् । अर्थसिद्धिरपि देहाध्यासेन यत पुत्ररूपस्योत्कृष्ट-

प्रकाराः—

इति च स्मारितम् । तेन तादृशपरमभक्तियुक्तां संसारस्य मुख्याभिख्यं तत्र स्फुटति, तत्रापि स्वविशेषणनाथपदप्रयोगाभ्यां स्फुटतीति तदन्ते तादृशसिद्धान्तं हृदि कृत्वा प्रार्थनैव तादृशासक्तिरूपफलार्थत्वगमिकेत्यर्थः । सिद्धान्तादिति ल्यब्लोपे पञ्चमी ।

[२०] ननु भवत्वेवं तथापि त्रिवर्गस्य गृहाश्रमे संसिद्धेर्मोक्षस्येतरेषु संसिद्धेः प्रश्ने च दारादमपत्राभ्यां गृहाश्रमयोजनात् तस्मिन्नितरेतरविरुद्धचतुर्वर्गानुभवसिद्धिर्न युक्तिमधिरोहतीत्याकाङ्क्षायां तदनुभवप्रकारमाहुः—धर्मेत्यादि । मायेति पूर्वोक्ता । करोतीति पुष्टिपुष्टिभक्तानां करोति ।

[२१] तत्रेति । तेष्वध्यासेषु । प्रसिद्धेति । ब्राह्मणत्वाद्यभिमानाभावे वासन्तिकाधानादिकरणायोगात्तदुपदेशशास्त्रादरतत्करणाभ्यां प्रसिद्धा । पुत्रेत्यादि । पुत्रे प्राणाधिकप्रियत्वभानात्तत्र ममतारूपतत्साधनत्वनैकल्ये स्वसाकल्यनैकल्यभानाभावे देहप्राणवियोगात् तदापर्येऽन्तारूपो वा प्राणाध्यासस्तस्मिन् सति तदुपार्जनप्रयत्नात् प्राणाध्यासेऽर्थसिद्धिः । प्रसिद्धेत्यध्याहारेण

द्विधा कामसिद्धिः प्रसिद्धा । * 'भक्तानां गृह एव विशिष्यते' इति न्यायान्मोक्षः ।

---

टिप्पणी—

स्वार्थस्य तदभ्यासेनैव सिद्धेः । कामसिद्धिरपि स्त्र्यपेक्षा देहाध्यासमूलैव । गृहासक्तिरपि तन्मूलैव ।

[२१] चतुर्विधस्यापि मोक्षरूपत्वमाह—भक्तानामिति । भगवन्मायया लीलोपयोगिपदार्थत्वेन तत्रासक्त्या तन्निरोधेन ब्रह्मभावापेक्षया गृहमेव भक्तानां विशिष्टं, यतो ब्रह्मभावेऽपि पुरुषार्थाननुभव इन्द्रियादिविकल्पश्च । अतोऽलौकिकदेहप्राप्त्या प्रभुप्राकट्येनालौकिकपुरुषार्थरूपलीलायामद्वन्द्वसाहित्येनान्तरमणात्मकोऽनुभवो मोक्ष इति सिद्धम् ।

प्रकाशः—

योऽयम् । तेष्वेव समवायरूपोऽध्यासो वा । मूले पुत्रपदमर्थमात्रोपलक्षणमित्याशयेनैवमुक्तम् । द्विधेत्यादि । अत्र इन्द्रियाध्यासः स्त्रियामेव, ममतादि वा तेन कामसिद्धिस्तयोरित्यर्थः ।

[२२] भक्तानामित्यादि । † "ब्रह्मानन्दं प्रविष्टानामात्मनैव सुखप्रमा । संघातस्य विलीनत्वाद्भक्तानां तु विशेषतः" "सर्वेन्द्रियैस्तथा चान्तःकरणैरात्मनापि हि । ब्रह्मभावात्तु भक्तानां गृह एव विशिष्यते" इति निबन्धकारिकाभ्यां, ‡ "पश्यन्ति ते मे रुचिराण्यवतंससमसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति" "तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः । हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते" इति श्रीकपिलदेववाक्यद्वयार्थं सङ्गृहीत, तदुक्तन्यायान्मोक्षोऽनिच्छापूर्वकभगवदेकमात्रतात्पर्यान्मोक्षरूपविशिष्टलीलोपयुक्तपदार्थत्वनिरूपणभगवदानन्दानुभवरूपो मोक्षः । गोपिकादितुल्यानां प्रसिद्ध इति योजना । तथा च हृदयरागपक्षपातविरोधो व्रजभक्तादीनामित्ययं प्रकार इत्यर्थः ।

श्रीवल्लभटि०—

स्यात्, तेन तत्सिद्धिरित्यर्थः । अलौकिकत्वं तु भगवदर्थत्वादितादर्थ्यश्रवणेन मुख्यतया सर्वोपाधिकत्वेन वजननद्वारा परम्परया सेवानिर्वाहकत्वेनैकान्तिकपुरुषोद्धारकत्वेन च । लोके पुत्रस्यार्थत्वेन प्रसिद्धत्वाभावात् सा नोक्ता ।

द्विधेति । तथा यथा विषयार्थं कामसिद्धिः प्रसिद्धा तद्वदत्रापि सेवायामुभयोश्चित्तचाञ्चल्याभावाद् भगवदीयपुत्रोत्पत्त्यैव तत्सिद्धिरित्यर्थः । भक्तानामिति । यथा तेषां भजनोपयोगित्वेन विविधलीलारसानुभावकत्वेन शून्यस्थितितुल्यमोक्षापेक्षया गृहमेव विशिष्यते तन्न्यायेनैवत्वापि पुष्टिमार्गीयत्वात्तन्मार्गीयत्व सम्भावभावनया भजने तथैव परमानन्दानुभवे स ततो विशिष्यते । अतएव "सोऽश्नुते सर्वान् कामान् सह" इत्यत्र मुख्यतया निरूपित पुष्टिमार्गीयो मोक्षो, न तु कैवल्यम् ।

---

* निबन्धशास्त्रार्थप्रकरणे का० ५१ † निबन्ध शा० ५३+५४. ‡ भा ३, २५, ३५+३६

चित्तस्य वासुदेवात्मकत्वान्मोक्षप्रकरणत्वाच्चित्तपदप्रयोगः । क्रीडामतिबन्धकत्वात्कृते विरोधाच्च निषेधप्रार्थना ।

---

टिप्पणी—[ २३ ] ननु कथमस्य तदधिकत्वेपि मोक्षरूपत्वं, चित्तासक्तेः संसाररूपत्वादित्याशङ्क्याहुः—चित्तस्येति । चतुर्विधेऽन्तःकरणे चित्तस्य वासुदेवात्मकत्वात्तस्य च मोक्षदातृत्वात्तद्वाचिचित्तपदप्रयोगेण मोक्षरूपत्वं सिद्धमित्यर्थः । किञ्च, प्रकरणमपि मोक्षस्येतिज्ञापनायापि चित्तपदप्रयोग इत्याहुः—मोक्षप्रकरणत्वादिति ।

[२४]ननु भगवन्मायाजनितासक्तिमात्रं प्रार्थ्येत, किं केवलासक्तिनिषेधप्रार्थनेनेत्यत आहुः—क्रीडामतिबन्धकत्वादिति । केवलासक्तिनिषेधाभावे 'अप्रतिषिद्धमनुमतं भवती'तिन्यायेन भग-

प्रकाशः—[२३] प्रकृते तादृशोनुभवप्रकारो विवक्षितोन्तःकरणाध्याससाध्यश्चेन्यत्र किं गमकमत आहुः—चित्तस्येत्यादि । *यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकमितिकपिलवाक्येन सर्वेष्वन्तःकरणेषु चित्तस्य वासुदेवात्मकत्वात् सृष्टिस्थितिप्रलयमोक्षकर्तृषु प्रद्युम्नादिषु चतुर्षु वासुदेवस्य मोक्षदातृत्वादत्र मोक्षप्रकरणादत्र चित्तपदप्रयोगः । तथा च ग एवोक्तप्रकारानुभवस्य तस्यान्तःकरणाध्याससाध्यतायाश्च विवक्षितत्वगमक इत्यर्थः । अनेन तादृशासक्तेर्मोक्षत्वे युक्तिरपि स्मारिता । तथा हि यत्रेदं चित्तस्य वासुदेवात्मकत्वबोधकं वाक्यं तत्रैव मनसोऽनिरुद्धत्वबोधकमहङ्कारस्य सङ्कर्षणत्वबोधकं च वाक्यमस्ति, तेन तत्तदन्तःकरणाधिदैविकत्वं तेषां व्यूहानां तत्र सिद्धम् । भक्तान्तःकरणरूपाश्च त एव । किञ्च, यो योऽध्यासः स सर्वोप्यहङ्काराध्यासमूलकः, अहङ्कारश्च सङ्कर्षणात्मकः, तत्राऽस्याहमित्यध्यासस्तदहङ्ग्रहोपासनातुल्यफलो भवति, अहङ्ग्रहोपासना च सर्वत्राप्यमोक्षसिद्धा । तथा च सा यथा मोक्षफलकत्वान्मोक्षरूपा तथायमध्यासोपि मोक्षफलकत्वान्मोक्षरूप इति तन्मूला देहाद्यासक्तिरपि तथेति ।

[२४] ननु सर्वमिदं तदोपपद्येत यद्यन्तरा प्रयोगो न स्यात्, दृश्यते च ॥ इति नायमर्थः साधीयान् । किन्तु स्वकर्मभिः संसारचक्रे भ्रमतो मम उत्तमश्लोकजनसख्यं भूयात् तस्य प्रार्थनीयत्वे हेतुः त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य नेति "भैवापवर्गो भ्रमतो यदे"तिवाक्योक्तासक्तौ सत्र भवतीति तदभावपूर्वकतत्सख्यमात्रप्रार्थनेत्ययं युक्त इत्यत आहुः—क्रीडेत्यादि । उत्तमसख्यायेति शेषः । अयमर्थः, त्वया ह्येतस्यासाधुत्वेन अनुपपत्तिमात्रमविवक्षितत्व-

श्रीवल्लभटि०—चित्तस्येति । चिती संज्ञाने इति धातोश्चित्तं ज्ञानात्मकम् । तच्च सत्त्वजन्यम् । तदधिष्ठाता वासुदेव इति तदात्मकत्वमुक्तम् । इतः पूर्वं त्रिभिः श्लोकैः पुष्टिमार्गीयपुरुषार्थत्वमुक्तम् । अत्र तन्मार्गीयो मोक्षो निरूप्यते इति तत्प्रकरणत्वम् । "ज्ञानान्मोक्ष" इतिन्यायेन चित्तपदप्रयोगो मूले । तेन शुद्धज्ञानात्मकत्व एव तस्य यथा मोक्षसाधकत्वं तथा शुद्धपुष्टिमार्गीयभावात्मकत्व एव तन्मोक्षसाधकत्वमित्यर्थो ज्ञापितः । क्रीडेति । संसारहेतुभूतमायामोहात्मक एव बद्धे भगवान् क्रीडतीति तत्प्रतिबन्ध-

---

* भा० ३, २६, २१. १ भा० १०, ५१, ५४.

तथा च कर्मसंबन्धव्यतिरेकेण केवलभगवन्मायया रमणरूपया भगवत्सेवाश्रवणादितत्पर-

टिप्पणी—

वन्मायायामपि तत्सत्त्वे तन्मिश्रणेन पुत्रादिषूममप्रसक्तबुद्धौ केवलभगवन्मायाभावान्न भगवान् क्रीडतीति क्रीडायां प्रतिबन्धकत्वाच्चन्निषेधप्रार्थनमिति भाव । अत एव "सैमागतान्पूजयती प्रजौकस"इत्यत्र भगवदीयत्वेपि ज्ञातिबुध्या तत्रासक्तौ मातृचरणानां तथैभाववर्णनं, लीलारसानुभवप्रतिबन्धकत्वात्पद्धश्चेति । किञ्च, मोक्षविरुद्धत्वादपि केवलासक्तिनिषेधप्रार्थनमित्याहु —प्रकृते विरोधाचेति। प्रकृते विरोधो नामासत्यां शब्दभेदमरिते लौकिकभाववर्णनं चेति। मोक्षो हि भगवदीयत्वं, तच्च सर्वांशे तदीयत्वानुसन्धानरूपं, तत्र केवलासक्तेरंशत सत्या अपि बाधकत्वान्निषेधप्रार्थनमित्यर्थ । [ २१ ] सिद्धमर्थमाहु —तथा चेति । कर्मसंबन्धव्यतिरेकेण संसारेपि प्रभुसंबन्धात्सर्वे-

प्रकाशः—

गमकतयोच्यते, सा तु नास्ति । तथा हि अत्र संदर्भे "अहं समाभाये"त्यादिवाक्यैर्द्विजस्य स्वपूर्वजन्मीनसर्ववृत्तान्तस्मरणं निश्चीयते । "त्रैवर्गिकायासे"तिवाक्यात्स्वस्मिन्प्रसादोऽनुमित इति च । एवं सति पूर्वजन्मीनान्याभिनिवेशाद्धिरःसद्भपुत्रदानवच्छोकनारदोपदेशभगवत्प्रसादविधाधराभिपत्यशिवोपहासाऽम्बिकाशाप अपि तस्य स्मृतिगोचरा इति पूर्वप्रसादस्य परमफलसाधकत्वं स्मृत्वा साम्प्रतं प्रसादे किं भगवता विधेयमिति तदाशये सन्दिहानः इदानीं च मरणकाल इतीदानीगोचरो मोचयिष्यत्येवेति निश्चिन्वानः अनुगृहीतस्यात्पौष्टिकमेव दास्यतीति निश्चित्य पूर्वजन्मीननारदाद्धिरःसत्यस्य भमत्सत्यस्वञ्च निश्चित्य यदि पुष्टिमर्यादया दित्सति तदा पूर्ववन्माभूदिति सख्ये माविरोधणे दीति प्रकारनिषेधस्य पूर्वार्धेन प्रार्थना, सख्यं भूयात्परं तथा न भूयादिति । यदि पुष्टिपुष्टा दित्सति तदा तथाऽसक्तचित्तस्य पूर्वार्द्धप्रार्थितसख्यं ■ भूयादितिविशेष्य निषेधस्योत्तरार्द्धेन प्रार्थनेति प्रकरणवशेनात्र वाक्यद्वयाङ्गीकारस्योपपन्नत्वात् तत्र नोपपत्तिरिति न सौर्थः किन्त्वयमेव साधीयानिति ।

[२५] सिद्धमाहुः—तथा चेत्यादि। "वैष्णवत्वं हि सहजमि"ति पुष्टिप्रवाहमर्यादायां पौष्टिकानां सामान्यलक्षणात्वादत्र, "न कर्मबन्धनं जन्म"तिवाक्यात्तद्व्यतिरेकेण केवला "अविद्याकामकर्मभिरि"तिवाक्योक्तभ्रमणसाधककामकर्मासंसृष्टा या क्रीडासाधिका भगवन्माया, तया गृहे गृहाश्रम एव "पश्यन्ति ते मे" इत्यत्रोक्तरीत्या तदनुभवन्, "पुंश्चल्या विमिश्राः सर्वशः" इति तेषा विशेषलक्षणात्सर्वं भगवदाशयपर्यन्तं जानन् भगवदीयः "यावन्न मयि ते

श्रीवल्लभटि०—

त्त्वम् । प्रकृतेऽर्थम् क्रीडैव प्रार्थ्यत इति तद्बाध्यबाधकविरोधात् तज्जनितासक्तिनिषेधप्रार्थना । तेन त्वन्मायायाऽऽसक्तचित्तस्य ममात्मजादिषु सख्यं भूयान्नेतरमायासक्तचित्तस्य लोकवदिति मूलार्थः पर्यवस्यति । तथा चेति । लोके कर्मसम्बन्धसत्त्वात् पुरुषार्थानुभवस्तथा तु विनात्र तदनुभवः । "तस्मिन्न दृष्टे परावरे" इति

१ भा. १०, ७, ६, १२ बहिर्भवत्याय इत्यर्थः । यशोदा अप्येवं बहिर्गता भावन्ते इति सुबोधिनी ।
३ पु० प्र० म० ।

तथा गृह एव चतुर्विधपुरुषार्थसुखमनुभवन् भगवदीय इति द्वितीया मुक्तिरियमेव मुख्या, आशीरिति सर्वान्ते क्रियाप्रयोगः । हे नाथ ? मर्यादाज्ञानमोक्षो मे मा भूयादिति ॥

॥ इति श्रीमत्प्रभुचरणकृता वृत्रासुरचतुःश्लोकीविवृतिः संपूर्णा ॥

---

टिप्पणी—

या तत्सम्बन्धराहित्येन केवलं भगवन्मायया लौकिकासक्तिसम्बन्धरहितया गृह एव लीलारूप-चतुर्विधपुरुषार्थसुखमनुभवन् भावप्रकारेण लोकवेदातीतप्रभुस्वरूपेण सह सर्वलीलानुभवं कुर्वन् भगवदीयः स्वतन्त्रभक्त इति द्वितीया पुष्टिपुष्टिमार्गीया मुक्तिरित्यर्थः ।

[ २६ ] तदुदाहरणं तु स्वामिन्य एवानन्तान्या, एतस्यैव सकलफलमूर्द्धन्यफलस्वहाप-नायाहु —इयमेवेति । इयमेव नान्या मुख्याखिलफलेषु, आशीरिति ज्ञापनाय सर्वान्ते पद्य-निष्ठार्थमात्रनिरूपणान्ते भूयादित्याशीर्वादार्थक क्रियापदप्रयोग इत्यर्थः ॥

प्रकाशः—

नाथे"तिविज्ञप्तिश्लोकोक्तरीत्या भगवता स्वीयत्वेन निश्चित इति द्वितीया पुष्टिपुष्टिकृता मुक्तिः । यथा च गृह एव तथानुभवत्वेन मर्यादापुष्टयुक्तव्यावृत्तत्वे सति "निर्गुणो मदपा-श्रय"इत्येकादशे गुणातीतकर्तृलक्षणाद्भगवदीयत्वेन त्रिविधलौकिककर्तृव्यावृत्तत्व पुष्टिमिश्रपु-ष्टजीवस्य तेषां स्वरूपं तेन रूपेण यावज्जीवं स्थितिः सेत्यर्थः । अत्रापि पूर्वकक्षा यादवादौ, उत्तमा श्रीमदुद्धवादौ ज्ञेया, "नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः" इति कर्मबन्धव्यतिरेकस्य "सुदुस्तरः मे मोहमहान्धकार" इत्यत्र "प्रसारितः सृष्टिविवृद्धये त्वये"ति भगवन्मायया देहाद्यासक्ते, 'मयापि तदभिप्रेतं जानन्ति'ति तादृशत्वस्य स्फुटत्वाद्दिति ।

[२६] एवं पुष्टिमार्गे द्विविधं मोक्षं निश्चित्य "शुद्धाः प्रेम्णातिदुर्लभा" इत्यत्र विचा-रितानां शुद्धपुष्टानां फलस्य स्वरूपस्य चेतोप्यधिकस्य हृदि कृत्वा प्रकृतानामेवदन्यता ज्ञाप-यितुमाहु—इयमित्यादि, इयमेव, नेतोऽधिकेत्यर्थः ।

नन्वत्रायमेवाशय इत्यत्र किं मानमिति चेत् उच्यते । अत्र "भक्तानामहं एव विनिश्चित" इतिन्यायोपक्षेपान् तद्रूपाख्याने साधनं भक्तिः फलं मोक्षस्तथापि फलदशायां साधनदशावैलक्षण्यवि-कथनेन "अनिच्छतो गतिमण्वीं प्रयुङ्क्ते"इति मुक्तिदित्सासूचनात् । शुद्धपुष्टानां तु मुक्तीच्छाया-मपि तदनुक्तेरिति जानीहि । न च भक्तानामित्यस्य स्वतन्त्रभक्तानां गोपिकादितुल्यानामिति व्याख्या-नादेवमिति शङ्क्यं, तस्य साधनदशामात्रोत्कर्षज्ञापनपरत्वात् । अन्यथा फलदशाकथनविरोधापा-तात् । प्रकरणेषु वेणुगीते "ईशाश्रयमाणं च मत्यागतिरि"ति प्रत्यागतेरकल्होकारात् ।

श्रीवल्लभटि०—

साक्षाद्भगवदीयस्य सर्वकर्मस्य पुरुषार्थः । भक्तिमार्गे इदमस्यामित्यादि च चतुर्विधपुरुषार्थपुनरभिप्रायः । अग्रे स्पष्टम् ॥

इति श्रीविट्ठलपादात्मजश्रीवल्लभकृता "कर्मोत्तरे"त्यस्य टिप्पणी समाप्ता ॥

---

१ भा० ११, ११, २८, । २ भा० ३, ४, ३१ । ३ भा० ३, २६, ३९ । ४ सर्वसौरमित्यस्य द० भा० १०, ११, ९ ।

टिप्पणी—

इति श्रीवल्लभाचार्यकृपया विनिरूपित । ममोत्तमेतिपद्यार्थव्याख्यानार्थो मया मुदा ॥ १ ॥
मयोदितमिदं भक्ता अवलोक्य विचारितम् । भवन्तु सतत श्रीमदाचार्यचरणाश्रया ॥ २ ॥
एतत्फल तत्कृपातो भविष्यति न संशय । अतस्तदुक्तमार्गेण भजनीय प्रभु सदा ॥ ३ ॥
स एव श्रीमदाचार्यपक्षपाती मम प्रभु । करिष्यति स्वकीयानामैहिक पारलौकिकम् ॥ ४ ॥

इति श्रीमत्प्रभुपादपद्मदासानुदासहरिदासविरचिता
ममोत्तमेतिपद्यव्याकृतिटिप्पणी समाप्ता

प्रकाशः—नन्वस्त्वेव, तथापि परमभक्तिस्वरूपे साधने तारतम्याभावात् फलभेद किमुक्तो च स्वरूप भिनत्तीति चेद्, उच्यते । उत्तरतन्त्रतातीयिकतृतीयपादीयाऽ“सर्वेधिया त्वविरोध” इतिसूत्रोक्तोपसद्न्यायेन भगवदिच्छाभेदादेवेत्यवेहि । तवस्तेष्वपि तारतम्य भ्रमरगीतोक्तसंदेशस्वरूपाद्ज्ञातव्यम् । एकादशीयद्वादशाध्यायस्था ‘न रोधयति मा योग’ इत्यारभ्य “यास्यसे ह्यकुतोभयम्” इत्यन्तात् सर्वात्मभावपूर्वकशरणोपदेशसंदर्भाच्च । तेन धर्मो हि पुष्टिमर्यादायामङ्गीकृतो न तु पुष्टिपुष्टाविति “न्यासादेशे”ष्वित्यत्र प्रभुचरणोक्तेः । सात्त्विकप्रकरणोक्तानां तत्सजातीयभाववता बाधः, राजसप्रकरणोक्ताना तादृशा चेतर, तामसप्रकरणोक्ताना तु मध्यापचिरेवेति लीलापरिकरस्य यथास्थितस्य नित्यत्वमस्यामेव लीलायां सिद्ध्यतीति । किं च पूर्वोक्तोपदेशश्रवणोत्तरमपि “सन्नेयः शृण्वतो वाच तव योगेश्वरेश्वर । न निवर्तत आत्मस्थो येन मे भ्राम्यति मन ” इतिश्रीमदुद्धवोक्तेरप्य भावोतिदुर्लभो भगवत्परमप्रसादादेव लभ्य इति च । तथाग्रे “त्वद्भक्तियोग च महद्विमृग्य” “आख्याही”ति प्रश्ने ‘भक्तियोगः पुरैवोक्त’ इति द्वादशाध्यायोक्त तत्स्वरूप स्मारयित्वा “पुनश्च कथयिष्यामि मद्भक्तेः कारणम्”- इत्यादिना तदुपायकथनात्तथा तदुपायस्वज्ञानपूर्वकतत्करणेन प्रसभाद्भगवत एव तादृशप्रसादसिद्धिर्नेतरथेत्यादिकमालोचनीयमिति तदेतत्सर्वं हृदि कृत्वोक्तमियमेवेत्यादि । इति दिक् ।

रससिन्धुचन्द्रमुखवारिजोद्गतपुष्टिपुष्टिमकरन्दरस ।
इति कृष्णचन्द्रकृपया विदित पुरुषोत्तमेन वचसा विवृत ॥
इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजपुरुषोत्तमकृत
पुष्टिमार्गीयमुक्तिविवृतिप्रकाश सपूर्णतामगात् ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

१ ब्र० भा० ३० ३ ३ ३३ अत्र उपसन्नाख्ये कर्मणि एके तानूनप्त्रस्पर्शरूप औपसद कर्मोक्त, अस्मिन् कर्मणि सर्वेषां ऋत्विजां तानूनप्त्रत्व समान, तथापि “अथ यत्र यजमानस्पृष्टोऽस्मि”ति यजमानस्य यस्मिन्स्नेहातिशय तमेव ऋत्विज यजमानो वृणुते न हि तत्र समानेषु तेषु कथं इच्छाभेद इति प्रश्न संभवति। एवमत्रापि भगवदिच्छया फलभेद इत्याशय । २ भा० ११ १२ १६

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचित-षोडश-ग्रन्थान्तगता-एकादशी

# भक्तिवर्धिनी

चतुर्दशटीकाभिःसमलंकृता

१. श्रीबालकृष्णानाम्
२. श्रीगोकुलनाथानाम्
३. श्रीरघुनाथानाम्
४. श्रीकल्याणरायाणाम्
५. श्रीहरिरायाणाम्
६. श्रीगोपेश्वराणाम्
७. श्रीपुरुषोत्तमानाम्
८. श्रीवल्लभानाम्
९. श्रीजयगोपालभट्टानाम्
१०. श्रीलालूभट्टानाम्
११. केषाञ्चित्
१२. श्रीवल्लभात्मजश्रीबालकृष्णानाम्
१३. श्रीगिरिधराणाम्
१४. श्रीद्वारकेशानाम्

श्रीमद्-वल्लभाचार्य-महाप्रभु-वंशावतंस-गोस्वामि श्री १००८
श्रीगोपीनाथ-महाराजश्रीत्येतैः — प्रकाशिता

प्रकाशक:

गोस्वामिश्री १००८ श्रीगोपीनाथजी महाराज,
बड़ा मन्दिर, श्रीजीवनजी महाराज लेन,
भुलेश्वर, बम्बई-४०० ००२, भारत.

साधारण संस्करण २००० प्रति

राज संस्करण १००० प्रति

श्रीवल्लभाब्दाः ५०३.

ग्रन्थ-परिचय लेखकः गोस्वामी श्याम मनोहर

मुद्रकः

स्टूडियो बहार, २३-ए, सेन्ट्रल चौपाटी बिल्डिंग, चौपाटी,
बम्बई-४०० ००७.

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ—परिचय

चौरासी वैष्णवोंकी वार्ताके भावप्रकाशके अनुसार भक्तिवर्धिनी ग्रन्थ श्रीमहाप्रभुने साचोरा पुरुषोत्तम जोशीके लिए लिखा था. एक किंवदन्तीके * अनुसार इस ग्रन्थका प्रणयनकाल वि. स. १५५२ माना जाता है तथा प्रणयनस्थल प्रयाग, परन्तु भावप्रकाशके अध्ययन करनेपर लगता है कि इस ग्रन्थकी रचना गुजरातके किसी गाममें हुई होनी चाहिये

"तब एक समय श्रीआचार्यजी गुजरात पधारे. सो पुरुषोत्तम जोशी मध्याह्नके समय एक तलावपर सन्ध्या करत हुते तब श्रीआचार्यजी तलावपर पधारिके सन्ध्या-वन्दन करन लागे. सो पुरुषोत्तम जोशीको ओर कृपा करिके दैवी जानि देखे. तब पुरुषोत्तम जोशी श्रीआचार्यजीके पास आई नमस्कार करि पूछ्यो– 'महाराज! यह कर्ममारग बडो के ज्ञानमारग बड़ो?' तब श्रीआचार्यजी कहे–'जाके मनमें दृढ जो मारग आवे, जामें जाको विश्वास होय, वाके भाये तो यह मारग बडो, और बडो तो भक्तिमारग है जामें जीव कृतार्थ होई. और ज्ञानमारग कर्ममारग सो कृतार्थ कठिनतासो होई सो काहूसो निर्वाह होय नाही काहेते? कष्ट साध्य है सो या कालमें शरीरको कष्ट क्यों न जाई कोऊ शरीरको कष्ट सहे तो मन ठिकाने रहे ताते भक्तिमारगमें जीव कृतार्थ होई और आश्रय नाही

"तब पुरुषोत्तम जोशीने कही जो 'महाराज! भक्तिको स्वरूप कहो, कृपा करिके कहिये!' तब श्रीआचार्यजी कहें– 'भक्तिको स्वरूप वर्णन करिये तो पार आवे नाही परन्तु कछुक तोको कहत हों' तब 'भक्तिवर्धिनी' ग्रन्थ करि ग्यारह श्लोक पुरुषोत्तम जोशीको सुनाये सो यह उत्तम अधिकारी है, ताते सगरो बोध हो गयो."

इस तरह भक्तिवर्धिनी पुरुषोत्तम जोशीके हृदयमें भक्तिके वर्धनार्थ लिखी गई थी, गुजरातमें ही कहीं पुरुषोत्तम जोशीके गांवमें. इसके उपदेशके बाद पुरुषोत्तम जोशी सपत्नीक श्रीमहाप्रभुके अनुयायी हुए, और अव्यावृत्त होकर अपने घरमें कृष्ण-सेवामें तत्पर होगये– "सो दोऊ जन प्रीतिसों सेवा करन लागे. पाछे श्रीआचार्यजी द्वारिका पधारे. सो पुरुषोत्तम जोशीने बहोत दिन सेवा करी. भगवद्भावमें मगन रहते. अव्यावृत्त होई रहे. काहूके आगे अपने हृदयको भाव प्रकट न करते."

---

(१) श्रीनाथदास शास्त्रीलिखित लेख, वैष्णववाणी वर्ष ४ अंक १९७९

भगवद्-गीताके तीसरे अध्यायमें अर्जुन भी भगवान्से ये ही प्रश्न कर बैठा था कि ज्ञानयोग यदि श्रेष्ठ है तो कर्मकी क्या आवश्यकता है, और कर्म यदि आवश्यक है तो फिर ज्ञानयोग किस अर्थमें श्रेष्ठ है. भगवान्ने यहां अर्जुनको समझाया है कि कर्मोके अनारम्भ या त्यागके कारण ज्ञानयोग श्रेष्ठ नहीं बन जाता क्योंकि फलासक्ति-रहित कर्म अर्थात् निष्काम-कर्म भी इस दृष्टिसे ज्ञानयोगसे मिलते लाभोको देनेमें सक्षम है कर्मके फलोंमें आसक्ति बनी रही तो ज्ञानमार्गीय साधकके नैष्कर्म्यका भी अपने-आपमें कोई मूल्य नहीं है. कर्मके फलोके आकर्षणके रहते हुए कर्मका त्याग निरा पाखण्ड है.

भगवान् कहते हैं कि उन्हें, आत्माराम-आप्तकाम होनेपर भी, कर्मत्यागके बजाय लोकसंग्रहार्थ ही सही पर कर्म अधिक सुहाता है. कोई भी ज्ञानी स्वयम् परमात्मासे अधिक निष्काम या आप्तकाम हो नहीं सकता फिर ज्ञानयोगके नामपर कर्मत्यागकी क्या आवश्यकता है!

ज्ञानयोगी हो अथवा कर्मयोगी दोनोको ही स्वधर्म-स्वकर्मका अनुष्ठान फलासक्तिके बिना करना चाहिये क्योंकि परधर्मका भलीभांति अनुष्ठान भी स्वधर्मके बिन-भली-भांति किये गये अनुष्ठानसे श्रेष्ठ नहीं है अर्जुनने इस सन्दर्भमे एक महत्त्वपूर्ण प्रश्न, भगवान्के समक्ष उपस्थापित किया है वह पूछता है कि स्वधर्म-पालनकी जब इतनी अधिक महत्ता है तब व्यर्थ लोग कभी स्वधर्मके त्यागद्वारा तो कभी परधर्मोके अनुष्ठानद्वारा पापाचरण क्यो करते है ?

भगवान्ने इस प्रश्नका विलक्षण उत्तर दिया है कि स्वधर्मत्याग अथवा परधर्माचरण के द्वारा मनुष्य पापोको बटोरता रहता है, अपने काम और क्रोध के वशीभूत होकर ज्ञानियोकी ज्ञानाग्नि भी बहुधा कामके धुएमें घिर जाती है काम ही ज्ञानियोका चिरशत्रु होता है

भगवान्की बात बड़ी अटपटी लगती है कि क्यो केवल ज्ञानमार्गीय साधक ही कामनाओका शिकार बनता है, कर्ममार्गीय या भक्तिमार्गीय साधक क्यो नहीं ? कामनाओका आकर्षण तो सभी मार्गोके साधकोमे प्रारम्भमे तो रहता ही है या कमसे कम रह सकता है! परन्तु थोडा ध्यानसे देखनेपर पता चलेगा कि हमारी ममता और अहन्ता का ही अदम्य विस्फोट क्रमश काम और क्रोधके रूपमे होता है. अतएव भगवान् कहते है— "काम एष क्रोध एष रजोगुणसमुद्भव महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" हमारी अहन्ता हमारे रजोगुणका साथ पाकर हमारे भीतर क्रोधके रोगका रूप धारण कर लेती है इसी तरह हमारी ममता हमारे रजोगुणका साथ पाकर हमारे भीतर कामके रोगका रूप धारण कर लेती है.

इन काम तथा क्रोधके रूपोमे हमारी ममता तथा अहन्ता के राजस विस्फोटसे ध्वस्त होती साधकोकी साधनाकी सुरक्षाके उपायरूप अनेक मार्ग प्रवृत्त हुए है.

(१) बुद्धने आत्मचेतनाको काम-क्रोधके आवेगोंसे बचानेके लिए इनकी बीजभूत अहंता और ममता कोही तोड़ देनेका उपाय सुझाया था एतदर्थ अनात्मवादपर आधारित 'नाहम्' की भावना तथा विज्ञानवादपर आधारित 'न मम'की भावना को जगानेपर भार दिया गया मानो हमारी चेतनामें अहन्ता और ममता की ग्रन्थियोमें यदि क्रोध और कामके व्रण हो गये हो तो उन्हें रुझानेके बजाय इन ग्रन्थियोकी ही शल्यचिकित्सा कर दी गई. वैदिक शास्त्रोको यह शल्यकर्म सभी स्थितियोमे मान्य नही था अत बुद्धसे पूर्व ही कर्मयोग ज्ञानयोग एवम् भक्तियोग की प्रणालियोमें अन्य अघोर एवम् अक्लिष्ट चिकित्सा इनकी सोची गई

(२) कर्मयोगकी प्रणालीमे अहन्ताको तोड़नेकी परवाह किये बिना ममताको विभिन्न देवताओमे जोड़नेकी चिकित्सा-प्रणाली अपनायी गई हैं — "अग्नये स्वाहा अग्नये इद न मम— सूर्याय स्वाहा सूर्याय इदं न मम" इत्यादि "वित्त च मे पुत्रं च मे पशुश्च मे" की ममतामयी सकाम-कर्म-वृत्ति वाले साधकोको ममताको — 'देवताये इद न मम" की प्रणालीद्वारा निष्काम-कर्मकी ओर कर्मयोग आगे बढाना चाहता है स्वयम्के उपभोगसे पूर्व देवताओंके यजनकी आवश्यकता है. अतएव कर्मयोगके निरूपणमें गीता हमें समझाती है

"कर्म किये बिना कोई रह नही पायेगा, अपनी प्रकृतिके अनुरूप विवश होकर कुछ न कुछ कर्म तो सभीको करने ही पड़ते ऐसी स्थितिम कर्मेन्द्रियोको सयत करनेके पाखण्डमे विमूढ साधक अपने असयत मनको इन्द्रियार्थोके चिन्तनमें डुबा देते है. जबकि सच्ची विशिष्टता तो मनसे इन्द्रियोको सयत करके कर्मेन्द्रियोसे आसक्ति-रहित कर्मयोगको करते रहनेमें है। अतएव नियत कर्मोको करते रहना उत्तम है, उन्हें त्याग देनेके बजाय. सर्वथा कर्मत्याग करनेपर तो शरीरयात्रा भी नही निभ पायगी और फिर इस लोकम वे ही कर्म बन्धनरूप माने गये है, जिनका अनुष्ठान यज्ञकर्मके रूपमें नही होता अत यज्ञार्थ किया गया कर्म तो असगभावसे करते ही रहना चाहिये. प्रजापतिने भी प्रजाकी सृष्टि यज्ञके साथ ही की है अत यज्ञ ही हमारी सारी कामनाओको भलीभांति पूर्ण करता है हम यज्ञके द्वारा देवताओको देनेकी वस्तु उन्हें देनी चाहिये और यज्ञभावित देवगण जो हमें मिलना चाहिये वह हमें देगें इसी आदान-प्रदानमें हमारा परमश्रेय रहा हुआ है जो देवताओने हमे दिया है उसम से जो उन्हें देन लायक है उसे दिए बिना जब हम अपने उपभोगमें लेते है तो हम चार बन जाते है अतएव यज्ञके बाद बची हुई वस्तुओंके उपयोगकी जीवनप्रणालीमे पापस्पर्श नही होता है फिर भी जो केवल अपने लिए पकाते है और खाते हैं, वे अन्नका नहीं प्रत्युत पापका ही भक्षण करते है"

इस विस्तृत उद्धरणके अध्ययनसे स्पष्ट हो जाता है कि कर्मयोग हमारी अहन्ता-

की परवाह अधिक नही करना चाहता किन्तु ममताको मार्गदर्शन देना चाहता है ममतामे रचे-पचे मनुष्य अपने उपभोगसे पूर्व यदि थोडी सी धीरज धरके देवताओको लिए "इद न मम" कहना सीख पायें तो निष्कामताके मार्गपर आगे बढा जा सकेगा यही निष्काम-कर्म अन्तमे आत्मसुख या शाश्वत स्वर्गका सुख प्रदान करेगा. परन्तु अहन्ताकी उपेक्षाके कारण इस कर्ममार्गमे प्रारम्भिक साधनावस्थामे अहन्ता और राजसगुण के साहचर्यसे पनपे क्रोधकी सम्भावना पदे-पदे रहती है कर्मयोग ममताको ही स्वस्थ बनता है

(३) ज्ञानमार्ग अत अहन्ताकी चिकित्सा— उसे स्वस्थ बनानेका प्रयास है कर्मयोगमे जैसे ममताको देवताओंसे जोडा गया था इसी तरह ज्ञानयोगमे हमारी अहन्ताको ब्रह्मके साथ जोडनेका प्रयास करना पडता है—"योहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेवाह मा जुहोमि स्वाहा" अर्थ मै जो कुछ हू—मै ब्रह्म ही हू हा, मै हू— मै ब्रह्म हू मै ही मै मेरा होम (ब्रह्ममें) करता हू.

कर्मयोग जैसे प्रारम्भमे—"पुत्र च मे वित्त च मे" की कामनाओंमे घिरे सकाम कर्मकर्ताको निष्काम-कर्मकी ऊचाईपर उठानेके लिए "इद न मम" म प्रशिक्षित करता है वहा यज्ञाग्निमें अपनी ममताकी आहुति देनी पडती है वैसे ही ज्ञानयोग ब्रह्माग्निमे अपनी अहन्ताकी आहुति देना सिखलाता है. ज्ञानयोग हमारे अहकारकी चिकित्सा है ध्यान रहे कि 'अहम्' की आहुति ब्रह्माग्निमे देनी है— अपने अहकारकी धधकती ज्वालाओंमे ब्रह्मकी आहुति ज्ञानयोग नही है !

वाक्य उद्देश्य-विधेयभाव-घटित होता है जैसे "गाय प्राणी है" वाक्यमे 'गाय' उद्देश्य है और 'प्राणी' विधेय है. इसी तरह "अह ब्रह्मास्मि" मे 'अहम्' उद्देश्य है और 'ब्रह्म' विधेय है अतएव अहमास्पद जीवात्माको ब्रह्म मानना वास्तविक ब्रह्मबोध है, तथा व्यापक अशी परमात्माके साथ अशरूप जीवात्माकी अहन्ताको सच्चे परिप्रेक्ष्यमे देखना है. ब्रह्मको उद्देश्य मानकर अहकारको विधेय बनाना सभी प्राणिओको गाय माननेके जैसी त्रुटी है ब्रह्म तो त्वकारास्पद भी है — "तत्त्वमसि"म और इदकारास्पद भी है— "सर्वं खलु इद ब्रह्म" म प्राणी तो गाय हाथी और घोडा आदि अनेक प्रकारके होते है अत सभी प्राणिओको गाय माननेकी जैसी त्रुटी ब्रह्मको अहमास्पद माननेवाले कर बैठते है अशीको अहम् नहीं कहा जा सकता है क्योंकि वह त्वम् भी है और इदम् भी अहम्की किन्तु अश होनेके कारण अशी ब्रह्म कहा जा सकता है बापके जैसा बेटेका चेहरा होता है बटेके जैसा बापका नही !

अतएव श्रीशकराचार्य कहते है कि लहरोको 'समुद्रकी लहरे' कहना चाहिये— समुद्रको 'लहरोवाला समुद्र' नही (सामुद्रो हि तरग क्वचन समुद्रस्तारग इति). किनारेपर पहुच कर लहर अपनी आहुति समुद्रमे दे देती है पर भला कभी समुद्रकी आहुति किसी लहरमे दी जा सकती है क्या ?

ज्ञानमार्गी अहन्ताकी चिकित्सापर भार देता है– ब्रह्मके साथ अपनी अहन्ताको जोड़कर उसे स्वस्थ बनाना चाहता है परन्तु इस प्रणालीमे ममताकी उपेक्षा हो जाती है और उसी ममताके विकृत होनेपर ज्ञानीके ज्ञानमे कामके व्रण प्रकट हो जाते हैं। ममताको छोड़कर केवल अहन्ताको ब्रह्मके साथ जोड़नेका प्रयास ज्ञानमार्ग है सफल होनेपर ब्रह्मानन्दकी उपलब्धि होती है और विफल होनेपर "अहं ब्रह्मास्मि' का उद्देश्य विधेयमे बदल जाता है प्राय ज्ञानमार्गीय विविदिषुके "अहं ब्रह्मास्मि" के जपमें ब्रह्मके बजाय अहम्पर भार आजाता है और इस महावाक्यका अर्थ बदल जाता है।

कभी विफल ज्ञानमार्गीय साधककी उपेक्षित ममता ज्ञानमार्गपर दौड़ते हुए साधकको रजोगुणकी गोधूलीकी वेलामे शिष्येषणा जैसी कामनाओका रूपधारण कर मोहपाशमे बाध लेती है अतएव भगवान् कहते हैं– "सदृश चेष्टते स्वस्या प्रकृतेर्ज्ञानवानपि प्रकृतिं यान्ति भूतानि निग्रह किं करिष्यति ?"

ये दोनो ही मार्ग, कर्मयोग और ज्ञानयोग के, यात्राकी सफलतापर मुक्तितक पहुचानेवाले मार्ग हैं, पर अहन्ता और ममता मे से एक ही किसीको स्वस्थ करनेके ये अपूर्ण प्रयास होनेसे हमारे काम और क्रोध के रोगोकी पूर्ण चिकित्सा नही करते भक्तियोग ही हमारी अहन्ता-ममताको पूर्णतया स्वस्थ रखनेकी एकमात्र चिकित्साप्रणाली है– अकठोर मृदु पूर्ण एवम् भयरहित।

(४) 'भक्ति' शब्द भज + क्तिन् को जोडने पर बनता है 'भज धातुकी प्रकृतिका अर्थ है सेवा 'क्तिन्' प्रत्ययका अर्थ होता है प्रेम अत 'भक्ति' शब्दका कुल अर्थ होता है प्रेमके साथ की जानेवाली सेवा

यह भक्ति हमारी अहन्ता-ममताकी पूर्ण चिकित्सा है शरणागत पुष्टिजीवको भगवत्सेवामे लगाकर यह उसकी अहन्ताको भगवान्के साथ जोड देती है– 'सोहम्' की प्रक्रियासे नही किन्तु 'दासोहम्' की प्रक्रियामे सेवा सचाईमे हम उसीको कर सकत है जिसके सामने हमारा अहकार झुक जाये पुष्टिप्रभु व्रजाधिप श्रीकृष्णके सम्मुख अपने अहकारको 'श्रीकृष्ण शरण मम" कह कर अथवा 'दासोहं कृष्णतव" कह कर झुका देना पुष्टिभक्त या पुष्टिभक्तिकी प्रकृतिमे निहित धर्म है अहकारके झुकने हो तनको भी झुकना पड़ेगा अतएव सिद्धान्तमुक्तावलीमें तनुवित्तजा सेवा तथा सिद्धान्तरहस्यमें सर्वसमर्पण की बात समझा कर चतुःश्लोकीमे व्रजाधिपके भजनको ही स्वधर्म माना गया है

हमारी ममताके श्रीकृष्णके साथ जुडनेकी बात चित्तकी कृष्णप्रवणताके रूपमें सिद्धान्तमुक्तावलीमें समझायी गई है. चतुःश्लोकीमें श्रीकृष्णके प्रति अपनी ममताको मोडनेकी क्रियाको ही पुष्टिमार्गीय काम कहा गया है. वही काम– वही कृष्णदर्शन-कामना 'भक्ति' शब्दमें 'क्तिन्' प्रत्ययका अर्थ है.

चतुःश्लोकीमें भजन और स्मरणके निरन्तर नक्रकी तरह चल पडनेकी क्रियाको मोक्ष माना गया है (स्मरण भजन चापि न त्याज्यमिति मति). अपरोक्षमें भजन या कायिकी सेवा हमारी अहन्ताके कृष्णसे जुडनेकी निशानी है परोक्षमें स्मरण या हमारे चित्तकी कृष्ण-तन्मयता हमारी ममताके कृष्णसे जुडनेकी निशानी है. पुष्टिभक्त न तो अपनी अहन्ता या ममता को देह या विषयो म मुक्त छोडना है, और न उन्हे तोडता ही है क्योंकि तोडना आवश्यक नहीं है पुष्टिभक्त अपनी अहन्ता एवम् ममता को व्रजाधिप श्रीकृष्णके साथ जोडता है जिस दिन—जिस क्षण ये दोनो भलीभांति श्रीकृष्णके साथ जुड जाती है,उसी दिन पुष्टिजीव मुक्त हो जाता है इससे अधिक और कोई मतलब मुक्तिका पुष्टिजीवके लिए नहीं होता.

हमारी अस्वस्थ अहन्ता-ममताकी क्लेशरहित, सम्पूर्ण एवम् सुख चिकित्सा भक्ति है अतएव श्रीमहाप्रभुने पुरुषोत्तम जोशीको समझाया था कि "ज्ञानमारग अरु कर्ममारग सो कृतार्थ कठिनतासो होई. तातें भक्तिमारगमें जीव कृतार्थ होई और आश्रय नाही. "

जब भक्ति ही हमारे संसार-रोगकी पूर्ण चिकित्सा है तो भक्तिरसायनके अनुपानको ही क्यो न बताया जाये ! वस्तुत तो भक्तिको औषधी मानना भी भक्तिकी पूर्ण महत्ताका विवरण नहीं है क्योकि भक्ति पुष्टिजीवके लिए औषधीसे कही अधिक स्वयम् स्वास्थ्य ही है परमात्माके प्रति जीवात्माकी भक्ति न होना जीवात्माके अस्वास्थ्यका लक्षण है पुष्टिप्रभु व्रजाधिप श्रीकृष्णके प्रति पुष्टिजीवका पुष्टिभक्तिके भावन रहित होना भी उसकी अस्वस्थताका लक्षण है गीताके छठे अध्यायकी समाप्तिपर अतएव भगवान् भी कहते हैं– "मुझे कर्ममार्गीय ज्ञानमार्गीय तपस्वी साधकोमे जो योगी हैं वे अधिक मान्य लगते हैं. योगियो मे भी श्रद्धापूर्वक जो अपनी अन्तरात्माको मेरे साथ जोड करके मेरा भजन करते है वे मुझे सभीमे युक्ततम लगते है"

इस जगतमे आहार-विहारकी जिन अनियमितताओके कारण हम अपनी अहन्ता-ममताको अस्वस्थ बना लेते है, उनसे बचनेके लिए श्रीमहाप्रभुका स्वास्थ्यवर्धक उपदेश 'भक्तिवर्धिनी'को सुनना समझना और हृदयमें धारण करना अत्यावश्यक है

भगवान्के अनुग्रहके कल्पतरुसे लिपट कर ऊपर उठनेवाली भक्ति-कल्पलताकी वृद्धिके उपायोको जानना अत आवश्यक है

भक्ति उस जीवात्मामे प्रकट होती है जिसका भगवान् भक्तिके लिए वरण करते है अपनी भक्तिके हेतु परमात्माद्वारा किया गया जीवात्माका वरण जीवात्मामे

बीजभावके रूपमें सर्वदा विद्यमान रहता है सत्संग गुरुकृपा या शास्त्रतात्पर्य-निर्णय के अनुकूल वातावरणमें कभी वह अंकुरित हो पाता है और कभी नहीं श्रीप्रभुचरण कहते हैं कि स्वयम् परमात्मा इस एकान्तभक्ति या व्रजभक्ति के बीजको बोता है— सत्संग एवम् गुरुकृपा के जलमें उसे सींचता है— अपने अनुग्रह कल्पतरुका सहारा देकर उसे ऊपर उठाता है— उसपर उगनेवाले पुष्प-फलोंकी रक्षा भी एक सावधान मालीकी तरह वह स्वयम् ही करता है— तब इस भक्ति-कल्पलताका नष्ट होना या मुरझा जाना, उसे कैसे पसन्द आयेगा ? अत पुष्टिभक्तिका बीजभाव अनश्वर बीजभाव है जन्म-जन्मान्तो तक यह नष्ट नहीं होता एक एक जन्म ऋतुचक्रकी तरह आते और जाते रहते हैं— किसी ऋतुमें किसी लतापर फूल खिलते हैं और किसी ऋतुमें नहीं इसी तरह भक्तिका बीजभाव भी किसी जन्ममें प्रभुके रूपमें अंकुरित हो पाता है और किसी जन्ममें नहीं.

भक्तिकी यह कल्पलता बढकर इतनी सघन हो जाये– पुष्टिके कल्पतरुके इर्द-गिर्द इतनी फैल जाये कि दोनोंके पल्लवोंको पृथक् करना कठिन हो जाये– पुष्टिकल्पतरु और भक्तिकल्पलता के पल्लव परस्पर मिलकर पुष्टिभक्तिके रूपमें दिखलाई देने लग जायें— ऐसा उपाय श्रीमहाप्रभु हमें दिखलाना चाहते हैं लता जब वृक्षपर भलीभांति दृढतासे लिपट जाती है— फैल जाती है— तब उसके नष्ट होने या मुरझा जाने का भय कम हो जाता है इसे ही 'बीजभाव की दृढता' कहा गया है

**दृढ बीजभाव तथा अदृढ बीजभाव वाले जीवोंके लिए भक्तिकी फलात्मिका वृद्धिके उपाय :**

अपनी प्रेमसेवात्मिका भक्तिके हेतु परमात्माद्वारा समारोपित वरणका बीजभाव जिन जीवात्माओंमें दृढ हो जाता है वे तो नि सत श्रवण-कीर्तनकी प्रणालीसे भी भगवान्की मानसी सेवामें सर्वदा मग्न रह सकते हैं. अत एसे भक्त गृहत्याग भी कर सकते है परन्तु जिन भक्तोंका बीजभाव ही दृढ न हो उन्हें गृहत्याग नहीं करना चाहिये, प्रत्युत अपने घरमें रहते हुए ही भगवत्सेवा तथा भगवत्कथा में अपने-आपको तत्पर बनाना चाहिये तभी बीजभाव दृढ होगा

भक्तिके तीन भेद होते हैं

१) भगवत्स्वरूपका बाह्य भजन
२) भगवत्स्वरूपका आन्तर भजन
३) भगवन्नामात्मक भागवतका श्रवण-चिन्तन-कीर्तन

बाह्याभ्यन्तरभेदेन रूपे भेदद्वय मतम्।
नाम्नि चैव तत्तत्रपा भक्तिमार्गो निरूपित ॥

जिसका बीजभाव दृढ हो गया हो अर्थात् पुष्टिभक्ति भगवत्प्रेमके रूपमें अंकुरित, भगवदासक्तिके रूपमें पल्लवित तथा भगवद्व्यसनके रूपमें फलित होने लग गई हो तो

ऐसे भक्तको भगवद्-व्यसनवे स्वभाववश ही भगवान्के विरहकी तीव्र अनुभूतिमें सिद्धान्तमुक्तावलीमें वर्णित मानसी सेवा अर्थात् भगवत्स्वरूपका आन्तर भजन सिद्ध हो जाता है और एक कदम आगे बढनेपर सर्वात्मभावके सिद्ध होनेपर आसक्तिभ्रम-न्यायसे सभी इन्द्रियोका भगवान्मे विनियोग भी सिद्ध हो जाता है ऐसे भक्तोके लिए सर्वत्र भगवद्-भाव प्रकट हो जाता है घर और बाहर का भेद लुप्त हो जाता है- वे घरमे बैठे हुए हो या बाहर, उनके मन और उनकी सभी इन्द्रियो से निरन्तर भगवान्की अनुभूति चलती रहती है फलस्वरूप आसकरणदासजी (दृष्टव्य २५२ वार्ता) की तरह उनका घरमे रहना अनिवार्य नही रह जाता है वे गृहत्याग कर सकते है- भगवल्लीलाओका श्रवण, भगवान्के स्वरूप, गुण एवम् लीलाओकी भावना तथा उनके कीर्तन की मस्तीमे, या कभी भगवद् विरहके तीव्रतापमे ऐसे भक्त कब घरको छोडकर बाहर निकल जाते है यह उन्हें स्वयम् भी मालूम नही पडता। (विरहानुभवार्थं तु परित्याग प्रशस्यते सन्यास-निर्णय)

सर्वनिर्णय- निबन्धमे श्रीमहाप्रभु कहते है कि केवल श्रीकृष्णको ही अपना स्वामी मानकर-आन्तर और बाह्य रूपमें सभी बातोका त्याग कर- श्रीकृष्णके विभूतिरूप सभी देवताओका सम्मान करते हुए- देहपातपर्यन्त केवल श्रीकृष्णमे ही अपने मनको जो एकाग्र कर पाते है- उनकी वाणीका और कायाका श्रीकृष्णमें विनियोग हो पाये या नही- उनके मनकी एकाग्रता स्नेहमयी बन पाये या नही- उन्हे श्रीकृष्णमे सायुज्यका लाभ अवश्य ही मिल जाता है पर भगवत्प्रेमके प्रबल प्रवाहके कारण दारा-आगार-पुत्र आप्त-प्राण वित्त-आदिमे जिनकी ममताकी दीवार ढह जाती है और जो स्वयम् भी उस प्रबल प्रवाहके वेगसे घरके बाहर फिक जाते है- ऐसे भक्त व्यसनदशाके परम-भावोकी भंवरोमे घिर जानेसे पुन पुन डूबते और उभरते रहते है। करोडो भक्तोंमे कभी-कभाक एकाद ही कोई ऐसा कृष्णव्यसनी बन पाता है।।

बीजभावकी ऐसी दृढताके अभावमे गृहत्याग श्रेयस्कर नही होता अत पहले बीजभावके दृढ होने तक धीरज रखनी चाहिये

त्याग और वैराग्य भगवदनुरागकी तीव्रताके कारण प्रकट होते हो तो उन्हे स्वस्थ एवम् सरस मानना चाहिये अन्यथा ससारमे केवल दोषदृष्टिके कारण जो वैराग्य पनपता है वह नीरस एवम् शुष्क, अतएव अस्वस्थ भी होता है ऐसे अस्वस्थ वैराग्य-वश व्यर्थ ही किसी भी वस्तुका त्याग कर देनेके बजाय उसे भगवान्को समर्पित कर देना चाहिये हमारी अहन्ता और ममता के विषयोको त्यागनेके बजाय उन्हे श्रीकृष्णको समर्पित कर श्रीकृष्णकी सेवामे उपयोग लानेवालेका बीजभाव दृढ हो सकता है अतएव श्रीमहाप्रभु कहते है कि अव्यावृत्त होकर स्वगृहमें स्वधर्म-भगवत्सेवा तथा भगवत्कथा-मय जीवनयापन करनेवालेका बीजभाव दृढ होता है "बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मत अव्यावृत्तो भजेत् कृष्ण पूजया श्रवणादिभि"

स्वगृहमे स्वधर्म-भगवत्सेवाके विषयमे शास्त्रार्थ प्रकरणमे एक विलक्षण बात श्रीमहाप्रभुने समझायी है कि ब्रह्मानन्दकी प्राप्तिके लिए मोक्षकी चाहनासे भक्ति करनेवालोको यह समझना चाहिये कि साध्य मोक्षके बजाय साधन भक्ति अधिक श्रेष्ठ है जो जीव मुक्त होते हैं वे देहेन्द्रियादिके सघातको छोडकर ही मुक्त हो पाते है -- उनकी केवल आत्मा ही परमात्मामे लीन हो पाती है, जबकि भक्तोके तो देह इन्द्रिय प्राण अन्त करण गृह परिवार आदि सभी कुछ उनके घरमे विराजते प्रभुकी सेवामे काम आते है भक्तका तो ससार भी ब्रह्मात्मक हो जाता है फलत जीवन्मुक्तिके बजाय भक्तके लिए तो भगवत्कृपाके साथ गार्हस्थ्य ही श्रेष्ठतर होता है अत बीजभाव दृढ करनेके लिए यह आवश्यक है कि घरमे स्वधर्माचरणको निभाते हुए अव्यावृत्त होकर भगवद्-भजन करना चाहिये

घरमे रहना है तो स्वधर्माचरणका त्याग सम्भव नही, पर स्वधर्मकी व्याख्या भी सरल नही है. 'स्वधर्म' का प्रथम अर्थ होता है स्वयमके वर्ण तथा आश्रम के अनुरूप यथाशक्ति शास्त्रविहित आचरण करना शक्ति रहनेपर स्वधर्माचरणमे सकोच नही करना चाहिये क्योकि जब तक यह देह है और इस देहके साथ हमारी अहन्ता-ममता जुडी हुई है, तब तक वर्णाश्रम धर्म ही स्वधर्म है— भगवद्धर्म भी विधर्म या परधर्म की तरह हो जाता है जब देहाभिमान शिथिल होने लग जावे तभी भगवद्दास्य या भगवत्सेवा आत्मदृष्टिसे स्वधर्म बन जाती है. तब वर्णाश्रमधर्म भी परधर्म बन जाता है (सुबो ३-२८-२), अत इस देहाभिमान और आत्माभिमान के अति कोमल और जटिल विवेकके साथ वर्णाश्रम-धर्मका निर्वाह करते हुए कृष्णभजनमे तत्पर रहना चाहिये कृष्णभक्तिमे जैसा कि हम देख चुके है अहन्ताको स्वस्थ करनेका उपाय कायिकी सेवा 'भज' धातुका अर्थ है, और ममताको स्वस्थ करनेका उपाय चित्तको कृष्णप्रेम-प्रवण बनना है तदनुरूप अपरोक्षमे पूजा कायाको भजनमें लगानेकी प्रक्रिया है और परोक्षमें श्रवण चिन्तन-कीर्तन मनको भजनमें लगानेकी प्रक्रिया है

स्नेहकी दृढताके बिना कायामे प्रेमसेवा न भी सिद्ध पाये पर माहात्म्यज्ञानको निभाते हुए पूजा तो निभाई जा सकती है पुष्टिप्रवाहमर्यादाग्रन्थमे इसी पूजाको— "प्रवाहेण क्रियारता " कह कर व्यक्त किया गया है सर्वनिर्णयमे २२७ वी कारिकासे लेकर २४६ वी कारिका तक भजनके इसी क्रियापक्षका निरूपण किया गया है यहाँ "एतत्सर्वं प्रयत्नेन गृहस्थस्य प्रकीर्तितम्" कहकर गार्हस्थ्यके इसकी आवश्यकता दिखलायी है यहाँ २४० वी कारिकामे श्रीमहाप्रभु कहते है कि श्रवण—कीर्तन आदि द्वारा जब हरि हृदयमे निविष्ट हो जाते है तभी पूजाका निर्वाह निर्व्यग्रतया सम्भव हो पाता है अतएव पूजाको यदि केवल क्रियारूप ही न रहने देना हो तो, श्रीमद्भागवतमे वर्णित भगवान्के स्वरूप गुण एवम् लीलाओंके श्रवण-भावन कीर्तनकी प्रणालीसे, उसे प्रेममय बनाना होगा (प्रेम्णोन्यत्साधन लोके नास्ति मुख्यं पर महत् श्रीभागवतमेवात्र पर

तस्य हि साधनम् सर्वनिर्णय) अन्यथा प्रेमरहित क्रियासे बहुधा व्यग्रता उत्पन्न होती ही है. श्रीमहाप्रभु अतएव कहते है–"सप्रेम इत्यनुद्वेगार्थम्" (सर्वनिर्णय २३०). भगवान्की पूजा करते समय अनन्य भाव नही जग पाया तो हम अव्यावृत्त होकर भजन नही कर पायेंगे–भक्तिके बजाय व्यर्थ ही मानसिक व्यग्रता बढा लेंगे.

भक्तिमार्गीय जीव अव्यावृत्त भी हो सकते है और व्यावृत्त भी अत. दोनो तरहके जीवोमे भक्तिके बीजभाव की दृढताके उपाय भी श्रीमहाप्रभुने दिखलाये है

**अव्यावृत्त और व्यावृत्त अधिकारियोंको भक्तिके बीजभावोंको दृढ करनेके उपाय:**

सभी इन्द्रियो और मन की अहमहमिकता ('पहले मैं–पहले मैं' की उतावल) से भगवान्के कार्योंमे जुट जानेकी अर्थात् सेवामें तत्पर होनेकी वृत्ति हमारी अहन्ताका भगवान्मे विनियोग है एतदर्थ अनन्यभाव आवश्यक होता है 'भाव' का अर्थ होता है: हमारे अन्तःकरणमे निहित रुचि या अभिप्राय. वह यदि केवल भगवान्के ही बारेमे हो तो उसे 'अनन्यभाव' कहते हैं अन्यथा (१) किन्ही अन्य देवताओंके बारेमे (२) अन्य लौकिक वस्तु या व्यक्तिके बारेमें, अथवा (३) पुष्टिमार्गीय फलसे भिन्न किसी फलके बारेमे, हमारे हृदयकी रुचि या भावना के प्रबल होनेपर हमारी कृष्णभक्ति अनन्य-भावात्मिका नही बन पायेगी

'अनन्य भाव'वाले भक्त ही अव्यावृत्त हो पाते हैं जिनकी भक्ति अनन्यभावात्मिका नही हो पाती वे अव्यावृत्त नही हो पायेंगे अन्यान्य भाव हमारे देह और अन्तःकरण को व्यावृत्त बनाये रखेंगे — वे अपनी पूर्तिकी कामनाके भावोका हमारे भीतर पैदा करके हमे व्यावृत्त बना देंगे — हमसे अव्यावृत्तिमय भजन सम्भव न हो पायेगा ऐसी स्थितिमें पुष्टिभक्तिमार्गपर चलनेके बुद्धिगत निर्णयके बावजूद भी हृदय इन पूर्वोक्त अन्यभावोकी पूर्तिके प्रयासमें यहा-वहा भटकता रहेगा — व्यावृत्त रहेगा ऐसी स्थितिमें श्रीकृष्णकी पूजा या कायिकी सेवा करते रहनेपर भी वह सेवाफलमें दिखलायी गयी — भोग, उद्वेग और प्रतिबन्धो से रहित सेवा नहीं हो पायेगी. फलस्वरूप चित्तमें वह व्यग्रता बढानेका ही कारण बनेगी

श्रीमहाप्रभु आज्ञा करते है कि पूर्वोक्त देवतान्तर, पदार्थान्तर, मार्गान्तर या फलान्तर के कारण जिनके देह और अन्तकरण बाह्य और आन्तर रूपमे व्यावृत्त न हो ऐसे जीवोको भगवत्पूजा और भगवत्कथा दोनोंमें ही तत्पर रहना चाहिये पर जिनके देह या अन्तःकरण किसी न किसी तरह व्यावृत्त हो उन्हे कृष्णसेवाका अनुष्ठान सहसा प्रारम्भ नही करना चाहिये प्रारम्भमे केवल भगवत्कथाके श्रवण चिन्तन एवम् कीर्तन की प्रणालीसे चित्तको अनन्यभाव-युक्त अव्यावृत्त बनाना चाहिये (. भावान्तरम्-हिनो वा स हि देवतान्तरविषय पदार्थान्तरविषय. मार्गान्तरविषयो वा तत्सहभावोऽत्र निषिध्यते फलभावश्च. सुबो. ३-२५-२२) इस सुबोधिनीकी भागवतकारिकामें

भक्तिका स्वरूप यो दिखलाया गया है :

मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥
मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।
.
त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।
संगस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥

(भाग. ३।२५।२२-२४)

व्याख्या : जो भगवान्में अनन्यभाव रखते हुए भगवान्की दृढ भक्ति करते हैं, जिन्होंने आलस्यवश नहीं किन्तु भगवदर्थ वेदादिशास्त्रोक्त अलौकिक कर्मोंका तथा लौकिक स्वजन-बान्धवोंका त्याग कर दिया हो, ऐसे भक्तोंकी सगति करनी चाहिये. निरन्तर भगवत्सेवा अथवा भगवत्स्मरण में सभी कर्म तथा सम्बन्ध बाधक बनते हैं— अनन्यभावमें कुछ न कुछ बाधा पहुचाते ही हैं. अत: इनमें अव्यावृत्त हुए बिना पूजा-श्रवणादिमें तत्पर होना चाहिये. सभी अधिकारियोंमें किन्तु ऐसी स्वरूपासक्ति सम्भव नहीं है. फलतः कथासक्ति— भगवान्के स्वरूप गुण एवम् लीलाओं के श्रवण और कथन में आसक्ति— जिनकी दृढ हो ऐसोंका सत्सग करना चाहिये. ऐसे भगवदीयोंके सत्सगमें— उनके मुखसे कथाश्रवण करनेसे तथा स्वयम् भी चिन्तन-कीर्तन करनेसे लौकिक विषयोंसे ममता हटकर भगवान्में जुड पायेगी.

अतएव श्रीमहाप्रभु कहते है कि जो अव्यावृत्त है उन्हें स्वरूपभजनके बजाय नाम-भजनमें प्रवृत्त होना चाहिये. इसी श्रवण-चिन्तन-कीर्तनकी प्रणालीद्वारा उनका बीज-भाव प्रेम-आसक्ति व्यसनकी अवस्थाओंमें विकसित हो पायेगा.

बीजभावको दृढ हुआ तभी समझना चाहिये जब हमारे देह और अन्तःकरण की व्यावृत्ति देशान्तर पदार्थान्तर मार्गान्तर एवम् कालान्तर के बारेमें न्यूनसे न्यूनतर होती हुई सर्वथा समाप्त हो जाये. घरमें भगवत्सेवा बिनमें नहीं निभ पाती परन्तु भगवत्कथाके श्रवण-भावन-कीर्तनकी प्रणालीसे जो अपनी भक्तिके बीजभावको दृढ करनेके लिए आगे बढते हैं, उन्हें इस यात्रामें ये कोशस्तम्भ (milestone) अपने भक्तिके मार्गपर मिलेंगे :

(क) जब बीजभाव भगवत्स्नेहके रूपमें अंकुरित हो जाता है तब गृहस्थका अपने घर-परिवारमें रहा अनुराग खतम हो जाता है. यह अवस्था बडी विलक्षण है. भगवान्में अनुराग बढने लगा तो भगवद्-भक्तिमें अनुपयोगी प्रत्येक वस्तुमें घर-परिवार आदिमें अनुराग घटने लगेगा.

जो अव्यावृत्त होकर अपने घरमें भगवत्सेवार्थ निवास करते हैं उनका अनुराग नष्ट होना आवश्यक नहीं है क्योंकि उनका घर उनकी अहन्ता-ममताको सन्तुष्ट करनेके

